**सलिलस्य (१) (ब) मेरुमत्सरादम्बरतल (२)-प्रसारित-शिरः-(३) सहस्रेण दिवस-कर-रथ-गमन-पथमपनेतुमभ्युद्यतेन अवगणित-सकलसुर-(४) वचसा विन्ध्यगिरि-णाऽप्यनुलङ्घिताज्ञस्य, (भ) जठरानल-जीर्ण-वातापिदानवस्य, (म) सुरासुर-मुकुट-मकरपत्र-(५) कोटि-चुम्बित-चरण-रजसो दक्षिणाशा-वधू-मुख-(६) विशेषकस्य, (य)**

---

पुरा कालेयनामानः केचन दानवा दिवसे सागरसलिले प्रच्छन्नाः सन्तो रात्रावाविर्भवन्तो भुवं स्वर्गञ्च नितरां पीडयामासुः, सुतरां वधाय तान् निष्काशयितुमिच्छुना सुरपतिना प्रार्थितो भगवानगस्त्यः समस्तसागर-जलानि पपाविति महाभारतवार्त्ता ।

(भ) मेर्व्विति। मेरोः सुमेरुपर्व्वतस्य मत्सरात् उन्नतिविषयकविद्वेषात् अम्बरतले आकाशे प्रसारितं विस्तारितं शिरःसहस्रं शृङ्गसमूहो येन तेन, दिवसकरस्य सूर्य्यस्य रथस्य गमनपथं अपनेतुं अवरोद्धुं अभ्युद्यतेन प्रवृत्तेन, तथा अवगणितानि अवज्ञातानि सकलानां सुराणां देवानां वचांसि सूर्य्यस्य गमनपथ-रोधनिषेधकवचनानि येन तेन विन्ध्यगिरिणाऽपि अनुल्लङ्घिता अनतिक्रान्ता परिपालिता आज्ञा आदेशो यस्य तस्य।

पुरा किल सुमेरुं प्रदक्षिणीकृत्य प्रतिदिनं सूर्य्यो भ्रमतीति विलोक्य विन्ध्याचल आत्मानमपि तथैव कर्त्तुं सूर्य्यमनुरुन्धन् सूर्य्येण प्रत्याख्यातः क्रोधेन तन्मार्गमवरोद्धुं वर्द्धमानो देवैर्निषिद्धोऽपि भृशं ववृधे ; तदा तु देवानामनुरोधेन सपत्नीके भगवत्यगस्त्ये तत्रोपस्थिते विन्ध्याचलः शिरोऽवनमय्य तं प्रणनाम, अगस्त्यस्तु "वत्स ! यावदहं पुनरागच्छामि तावत्त्वमीदृगेवावनतशिरास्तिष्ठ" इत्यभिधाय दक्षिणस्यां गतो नाद्यापि निवर्त्तते, विन्ध्याचलोऽपि तदादेशादद्यापि तथैवास्ते, इति स्कन्दपुराणकाशीखण्डवार्त्ता ।

(म) जठरेति। जठरानलेन उदरवह्निना जीर्णः परिपाकं नीतो वातापिदानवो येन तस्य। अत्राय-मितिहासः—

पुरा किल इल्वलवातापिनामानौ भ्रातरौ दैत्यविशेषौ बभूवतुः। तयोरिल्वलो ब्राह्मणरूपमास्थाय मेष-रूपधारिणं वातापिं निहत्य तन्मांसं पक्त्वा समागतान् ब्राह्मणान् भोजयामास, भुक्तवत्सु च ब्राह्मणेषु "वातापे ! निष्क्रम" इतील्वलेनाहूतो देववरप्रभावेण वातापिस्तेषामुदराणि भित्त्वा निष्क्रमति स्म, परञ्च तौ तेषां धनान्यपहृतवन्तौ। देवैरित्थमवलोक्य प्रतीकाराय प्रार्थितो भगवानगस्त्यस्तथैव तन्मांसमभ्य-वहार्य्य जीर्णमकरोदिति महाभारतवार्त्ता ।

(य) सुरेति। सुरासुराणां देवदानवानां मुकुटेषु किरीटेषु यानि मकरपत्राणि स्वर्णनिर्म्मिता मकरा-कारपत्राः तेषां कोटिभिरग्रभागैश्चुम्बितानि स्पृष्टानि चरणरजांसि पदधूलयो यस्य तस्य, सुरासुरवन्दितचरण-

---

অনুসারে সকল সমুদ্রের জল পান করিয়াছিলেন, (ভ) এবং বিন্ধ্যপর্ব্বত, সুমেরু পর্ব্বতের প্রতি বিদ্বেষবশতঃ আকাশে অসংখ্য শৃঙ্গ বিস্তারপূর্ব্বক দেবগণের বাক্যে অবহেলা করিয়া, সূর্য্যের গমন-পথ অবরোধ করিতে উদ্যত হইয়াছিল, কিন্তু যে অগস্ত্যের আদেশ লঙ্ঘন করে নাই ; (ম) যে অগস্ত্য জঠরানলে বাতাপি দানবকে জীর্ণ করিয়াছিলেন, (য) দেবগণ ও অসুরগণ স্বকীয় মুকুট-

---

(१)···जलस्य। (२) गगनतल...। (३)...शिखर...। (४) सुरसमूह...। (५)...मुकुटतटघटित-मरकतमयपत्रभङ्गकोटि...। (६) दक्षिणामुखविशेषकस्य।

सुरलोकादेकहुङ्कारनिपातित-(१) नहुष-प्रकटप्रभावस्य भगवतो महामुनेरगस्त्यस्य (र) भार्य्यया लोपामुद्रया (२) स्वयमुपरचितालवालकैः करपुट-सलिल-सेक-संवर्द्धितैः सुतनिर्विशेषैरुपशोभितं पादपैः, (ल) तत्पुत्रेण च गृहीत-व्रतेनाषाढ़िना (३) पवित्र-भस्म-विरचित-त्रिपुण्ड्रकाभरणेन कुशचीवर-(४) वाससा मौञ्ज-(५) मेखलाकलितमध्येन गृहीत-हरित-पर्णपुटेन (६) प्रत्युटज-मटता भिक्षां दृढ़दस्युनाम्ना पवित्रीकृतम्, (व) अतिप्रभृतेराहरणाच्च यस्येध्म-

---

स्येत्यर्थः। दक्षिणा आशा दिगेव वधूर्नारी तस्या मुखे विशेषकस्य तिलकस्वरूपस्य। अत्र दक्षिणाशायां वधूत्वारोपोऽगस्त्ये तिलकत्वारोपस्य हेतुरिति परम्परितरूपकमलङ्कारः।

(र) सुरेति। सुरलोकात् स्वर्गात् एकहुङ्कारेण हुङ्कृतिमात्रेण निपातिते प्रभ्रंशिते नहुषे प्रकटो व्यक्तः प्रभावो माहात्म्यं यस्य तस्य।

पुरा किल वृत्रवधेन ब्रह्महत्यापापशालिनि देवेन्द्रे मानससरोवरे तिष्ठति देवैः स्वर्गमराजकमवलोक्य चन्द्रवंशीयो राजा नहुषः स्वस्वतेजोभिर्विवर्द्ध्य स्वर्गराज्ये प्रतिष्ठापितः। स कदाचिदिन्द्राणीं कामयमानस्तयाऽभिहितः "राजन्! यदि भवान् महर्षिभिरूढ़ां शिविकामारुह्य मन्मन्दिरमागन्तुमर्हसि तदा भवन्तमहं भजामि" इति। नहुषस्तु तदेवाङ्गीकृत्य भृगुप्रभृतीन् देवर्षीन् वाहकतया नियोज्य शिविकामारूढ़स्तामिन्द्राणीं प्रति गच्छन् द्रुतं गन्तुमशगामिनं भृगुं शिरसि पदेन 'सर्प सर्प' इति ब्रुवन्नताड़यत्, अत्रान्तरे भृगोर्जटासु लीनो भगवानगस्त्यस्तत्पदेनाहतः शशाप "त्वं सर्पः सन् पतितो भव" इति, तेन च नहुषः सर्पः सन् हिमाचलगुहायामपतदिति महाभारतवृत्तान्तः।

(ल) भार्य्ययेति। उपरचितानि निर्म्मितानि आलवालानि मूलजलाधारा येषां तैः, करपुटेन स्वहस्त-युगलेन यः सलिलसेको जलसेचनं तेन संवर्द्धितैः, सुतनिर्विशेषैः पुत्रतुल्यैः पादपैर्वृक्षैरुपशोभितं तदाश्रमपदम्।

(व) तदिति। तस्य अगस्त्यस्य पुत्रेण, गृहीतव्रतेन ब्रह्मचर्य्यव्रतधारिणा, आषाढ़ः पलाशदण्डोऽस्यास्तीति तेन "आषाढ़ो व्रतिनां दण्डे मासे मलयपर्वते।" इति विश्वः। "ब्राह्मणो वैल्वपालाशौ" इति मनुश्च। पवित्रेण भस्मना विरचितं कृतं त्रिपुण्ड्रकं त्रिरेखान्वितस्तिलकविशेष एव आभरणं येन तेन, "ब्राह्मणानां त्रिपुण्ड्रक"मिति स्मृतेः। कुशानां चीवरं कुशनिर्म्मितं चीरं वासो वसनं यस्य तेन, मौञ्ज्या मुञ्जनिर्म्मि-

---

যাঁরা যে অগস্ত্যের চরণধূলি স্পর্শ করিয়া থাকেন আর যিনি দক্ষিণদিগ্‌বধূর ললাটের তিলক (র) এবং একমাত্র হুঙ্কারে নহুষ রাজাকে স্বর্গ হইতে নিপাতিত করিয়া নিজের মাহাত্ম্য প্রকাশ করিয়াছিলেন, (ল) সেই ভগবান্ মহর্ষি অগস্ত্যের ভার্য্যা লোপামুদ্রা, স্বয়ং আলবাল নির্ম্মাণ করিয়া স্বহস্তে জলসেচনপূর্ব্বক যাহাদিগকে পুত্রনির্ব্বিশেষে সংবর্দ্ধিত করিয়াছিলেন, সেই সকল নানাবিধ বৃক্ষে সেই আশ্রমটি পরিশোভিত ছিল। (ব) ব্রহ্মচর্য্যাবলম্বী ও পলাশদণ্ডধারী দৃঢ়দস্যু-

---

(१)…निपतित…। (२) तद्भार्य्यया लोपामुद्रया च। (३) आषाढ़िव्रतिना। (४)…चीर…। (५) मुञ्ज…। (६)…पत्रपुटेन।

वाह इति पिता द्वितीयं नाम चकार, (श) दिशि दिशि शुकहरितैश्च (१) कदलीवनैः श्यामलीकृत-परिसरं (ष) सरिता च कलसयोनि-परिपीत-सागर-मार्गानुगतयेव बद्धवेणिकया गोदावर्य्या (२) परिगतमाश्रमपदमासीत्। (स)

(यत्र च दशरथवचनमनुपालयन्नुत्सृष्टराज्यो दशवदन-लक्ष्मी-विभ्रम-विरामो (३) रामो महामुनिमगस्त्यमनुचरन् सह सीतया लक्ष्मणोपरचित-

---

तया मेखलया कलितो बद्धः मध्यः कटिदेशो येन तेन, "मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्य्या विप्रस्य मेखला।" इति मनूक्तेः। गृहीतं भिक्षान्नस्थापनार्थं धृतं हरितं हरिद्वर्णं पर्णपुटं प्रवनिर्म्मितपुटकं येन तेन, प्रत्युटजं प्रतिपर्णशालं भिक्षां अटता भिक्षार्थं भ्रमता। भिक्षामिति "अकथितञ्चेति" द्वितीया। दृढ-दस्युरिति नाम यस्य तेन पवित्रीकृतं अवस्थानेन पूतम्।

(श) अतीति। पिता अगस्त्यः, अतिप्रभूतानां अतिप्रचुराणां इध्मानां काष्ठानां आहरणादासादनात्। इध्म वहतीति इध्मवाहः कर्म्मण्यण्।

(ष) दिशीति। शुकवत् कीरशरीरवत् हरितैर्हरिद्वर्णैः कदलीवनैः रम्भाकाननैः श्यामलीकृतः परिसरः प्रान्तभूमिर्यस्य तत्। अत्र शुकहरितैरिति लुप्तोपमालङ्कारः।

(स) सरितेति। कलसयोनिना अगस्त्येन परिपीतस्य पानेन मृतस्येति भावः, सागरस्य मार्गं पन्थानं अनुगतयेव अनुसृतयेव बद्धा धृता वेणिका जलप्रवाहो यया तया, बद्धा संस्काराकरणेनैव संयता वेणिका केशविन्यासविशेषो यया तया च, गोदावर्य्या सरिता नद्या परिगतं परिवेष्टितम्। अगस्त्येन परिपीत तया मृतस्य सागरस्यानुगमनं सर्वदा वेणीबन्धनञ्च सत्या गोदावर्य्या कार्य्यमेवेति भावः। तथा च हारीतः— "न प्रोषिते तु संस्कुर्य्यान्न वेणीञ्च प्रमोचयेत्।" अत्र क्रियोत्प्रेक्षालङ्कारः। समासोक्तिरलङ्कारो व्यज्यते।

(ह) यत्रेति। यत्र यस्मिन्नाश्रमे दशरथस्य वचनं वनगमनादेशं। दशवदनस्य रावणस्य या लक्ष्मीः राजश्रीस्तस्या विभ्रमस्य विलासस्य विरामोऽवसानं यस्मात् स तादृशो रामः। अनुचरन् शुश्रूषमाणः।

---

নামক অগস্ত্যের পুত্র, পবিত্র ভস্ম দ্বারা ললাটে ত্রিপুণ্ড্র নির্ম্মাণপূর্ব্বক, কুশময় কৌপীন ধারণ ও মুঞ্জনির্ম্মিত মেখলাদ্বারা কটিদেশ বন্ধন করিয়া হরিতবর্ণ পত্রপুটক (পাতার ঠোঙা) ধারণ-পূর্ব্বক, প্রত্যেক পর্ণশালাতে ভিক্ষার নিমিত্ত পর্য্যটন করত সেই আশ্রমকে পবিত্র করিয়া-ছিলেন; (শ) দৃঢ়দস্যু, অতিপ্রচুর পরিমাণে কাষ্ঠ আহরণ করিতেন বলিয়া মহর্ষি অগস্ত্য, তাঁহার দ্বিতীয় নাম করিয়াছিলেন—'ইধ্মবাহ'। (ষ) শুকপক্ষীর ন্যায় হরিতবর্ণ কদলীবন সেই আশ্রমের সকলদিকের প্রান্তভাগ শ্যামবর্ণ করিয়াছিল। (স) ভগবান্ অগস্ত্য পান করায় বিনাশপ্রাপ্ত সাগরের পথ অনুসরণ করিয়াই যেন বেণীধারণপূর্ব্বক গোদাবরী নদী সেই আশ্রমকে পরিবেষ্টন করিয়া প্রবাহিত হইত।

(হ) রাবণ-রাজলক্ষ্মীর বিলাসশোভার অবসানকারী রামচন্দ্র, দশরথের বাক্য পালন করিবার জন্য রাজ্যপরিত্যাগপূর্ব্বক সীতার সহিত যে আশ্রমে আসিয়া মহর্ষি অগস্ত্যের পরি-

---

(१) शुककुल...। (२) कावेर्य्या। (३) विभ्रमरामो...।

रुचिर-पर्णशालः पञ्चवट्यां कञ्चित् कालं सुखमुवास। (च) चिरशून्येऽपि यत्र शाखा-निलीन-निभृत-पाण्डु-कपोतपङ्क्तयो लग्न-(१) तापसाग्निहोत्र-धूम-राजय इव लक्ष्यन्ते तरवः। (छ) वलिकर्म-कुसुमान्युद्धरन्त्याः सीतायाः कर-तलादिव संक्रान्तो यत्र रागः स्फुरति लताकिसलयेषु। (क) यत्र च पीतोद्गीर्ण-जलनिधि-जलमिव मुनिना निखिलमाश्रमोपान्तवर्त्तिषु विभक्तं महाह्रदेषु। (ख) यत्र च (२) दशरथ-सुत-निशित-शर-निकर-निपात-निहत-रजनीचर-बल-बहुल-

---

लक्ष्मणेन उपरचिता निर्म्मिता रुचिरा मनोहरा पर्णशाला यस्य सः। अत्र विरामो राम इति यमका लङ्कारः।

(च) चिरेति। चिरशून्ये बहुकालान्मुनिजनरहिते, यत्र आश्रमे। शाखासु निलीना अवस्थिताः निभृता निःशब्दाः पाण्डवः धूसरवर्णाः कपोतपङ्क्तयः पारावतश्रेण्यो येषु ते, अतएव लग्नाः संसक्ताः तापसानां तपस्विनां अग्निहोत्रस्य प्रात्यहिकयज्ञविशेषस्य धूमराजयः येषु ते तादृशा इव तरवः अद्यापि लक्ष्यन्ते दृश्यन्ते। अत्र धूमराजीनां लग्नत्वस्योत्प्रेक्षणात् क्रियोत्प्रेक्षा पदार्थहेतुकं काव्यलिङ्गञ्च, अनयो-रङ्गाङ्गिभावेन सङ्करः।

(क) वलीति। वलिकर्म्मणो देवार्चनकार्य्यस्य कुसुमानि पुष्पाणि उद्धरन्त्याः सञ्चिन्वत्याः सीताया जानक्याः करतलात् पाणितलात् लताकिसलयेषु वल्लीपल्लवेषु संक्रान्तो लग्न इव सन् रागो रक्तिमा स्फुरति प्रकाशते। अत्र क्रियोत्प्रेक्षालङ्कारः।

(ख) यत्रेति। यत्र च आश्रमे, मुनिना अगस्त्येन आदौ पीतं अनन्तरमुद्गीर्णं उत्तोलितं निखिलं समस्तं जलनिधिजलं आश्रमोपान्तवर्त्तिषु महाह्रदेषु विभक्तमिव विभज्य स्थापितमिव। अत्रापि क्रियोत्प्रेक्षालङ्कारः, तेन च ह्रदानामगाधजलशालित्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

(ग) यत्र चेति। दशरथसुतयो रामलक्ष्मणयोर्ये निशितास्तीक्ष्णाः शरनिकरा वाणसमूहास्तेषां निपा-तेन आघातेन निहतानि यानि रजनीचरबलानि राक्षससैन्याः तेषां बहुलरुधिरैः प्रचुरशोणितैः सिक्तानि

---

চর্য্যা করত, পঞ্চবটীবনে লক্ষ্মণের নির্ম্মিত মনোহর পর্ণশালাতে কিয়ৎকাল সুখে বাস করিয়াছিলেন। (ক) মুনিজনবিহীন যে আশ্রমে ধূসরবর্ণ কপোতগণ, বৃক্ষসমূহের শাখাতে নিঃশব্দে অবস্থান করায় এখনও যেন তপস্বিগণের অগ্নিহোত্রযজ্ঞের ধূমসমূহ সংলগ্ন রহিয়াছে বলিয়া প্রতীতি হয়। (ক) যে আশ্রমে দেবতা-পূজার জন্য পুষ্পচয়নের সময়ে সীতার করতল হইতে রক্তিমা যেন লতাপল্লবসমূহে সংলগ্ন হইয়াছিল, তাহাই অদ্যাপি প্রকাশ পাইতেছে বলিয়া বোধ হয়, (খ) এবং যে আশ্রমে, মহর্ষি অগস্ত্য সমস্ত সাগরের জল পান করিয়া পুনরায় উদ্গীরণপূর্ব্বক, আশ্রমের নিকটবর্ত্তী মহাহ্রদসমূহে যেন বিভক্ত করিয়া রাখিয়া দিয়াছেন বলিয়া বোধ হয়। (গ) যে আশ্রমে রাম ও লক্ষ্মণের তীক্ষ্ণ শরসমূহের আঘাতে নিহত রাক্ষসসৈন্যগণের রক্তে,

---

(१)...पङ्क्तयोऽमलग्न...। (२) यत्र

रुधिर-सिक्त मूलमद्यापि तद्रागाविद्ध-(१) निर्गत-पलाशमिवाभाति नवकिसलय-(२) मरण्यम्। (ग) अधुनापि यत्र जलधरसमये गम्भीर-(३) मभिनव-जलधर-निवह निनादमाकर्ण्य भगवतो रामस्य त्रिभुवनविवरव्यापिनश्चापघोषस्य स्मरन्तो न गृह्णन्ति शष्प-कवलमजस्रमश्रुजल-लुलित-दीनदृष्टयो वीक्ष्य शून्या दश दिशो जराजर्ज्जरितविषाणकोटयो जानकीसंवर्द्धिता जीर्णमृगाः। (घ) यस्मिन्ननवरत-मृगया-निहत-शेष-(४)वन हरिण-प्रोत्साहित इव कृतसीताविप्रलम्भः कनकमृगो

---

मूलानि यस्य तत्, नवानि किसलयानि पल्लवानि यत्र तत् तादृशं अरण्यं कर्त्तृ, अद्यापि तेषां रुधिराणां रागेण लौहित्येन आविद्धानि युक्तानि सन्ति निर्गतानि पलाशानि पल्लवपत्राणि यस्मिन् तत् तादृशमिव आभाति दीप्यते। अत्र तद्रागाविद्धक्रियोत्प्रेक्षणात् क्रियोत्प्रेक्षालङ्कारः।

(ग) अधुनापीति। जलधरसमये वर्षाकाले। अभिनवजलधराणां नूतन-मेघानां निवहस्य समूहस्य निनादं गर्ज्जनं। त्रिभुवनस्य विवरं अन्तरालं व्याप्नोति पूरयतीति स तस्य, चापघोषस्य कार्म्मुकशब्दस्य। "स्मृत्यर्थकर्म्मणीति" कर्म्मणि षष्ठी। स्मरन्तश्चिन्तयन्तः। दश दिशः शून्या रामलक्ष्मणसीतारहिताः, वीक्ष्य दृष्ट्वा, अश्रुजलैः तेषां शोकजनितनेत्रजलैः लुलिताः प्लाविताः, दीनाः कातराः दृष्टयो नेत्राणि येषां ते, तथा जरया वार्द्धक्येन जर्ज्जरिता जीर्णाः विषाणानां शृङ्गाणां कोटयः अग्रदेशा येषां ते, जानक्या सीतया संवर्द्धिताः तृणजलादिदानेन वृद्धिं प्रापिताः जीर्णमृगा वृद्धहरिणाः अधुनापि शष्पकवलं घासग्रासं न गृह्णन्ति तेषां शोकेनेति भावः। अत्र गम्भीरमेघगर्ज्जनश्रवणेन रामस्य चापध्वनिस्मृतेः स्मरणालङ्कारः, तथा शष्पकवलग्रहणसम्बन्धेऽपि तदसम्बन्धोक्तेरतिशयोक्तिरित्यनयोरङ्गाङ्गिभावेन सङ्करः।

(घ) यस्मिन्निति। अनवरता अविश्रान्ता या मृगया पशुवधक्रिया तस्यां निहतेभ्यः रामेण विनाशितेभ्यः शेषा अवशिष्टा ये वनहरिणाः तैः प्रोत्साहित इव सीताप्रतारणापूर्वकरामापहरणे प्रकृष्टोत्साहीकृत इव कनकमृगः सुवर्णमयहरिणवेशधारी मारीचः, कृतः सीतायाः विप्रलम्भः प्रतारणा येन तादृशः सन् राघवं रामं। अत्र क्रियोत्प्रेक्षालङ्कारः।

---

আশ্রম-বনস্থিত যে বৃক্ষসমূহের মূলদেশ সিক্ত হইয়াছিল, নবপল্লবসমন্বিত সেই বৃক্ষ-সমূহ হইতে অদ্যাপি যেন সেই রক্তে রঞ্জিত হইয়া পত্রসমূহ-নির্গত হইতেছে। (ঘ) যে আশ্রমে সীতাদেবী তৃণ ও জলাদি প্রদান করিয়া যাহাদিগকে বর্দ্ধিত করিয়াছিলেন, বর্ত্তমান সময়ে বার্দ্ধক্যবশতঃ জীর্ণশৃঙ্গ সেই সকল বৃদ্ধ হরিণগণ বর্ষাকালে নূতন মেঘের গম্ভীর গর্জন শুনিয়া, ভগবান্ রামচন্দ্রের ভুবনব্যাপী কার্ম্মুকধ্বনি স্মরণ করত, সহসা দশ দিক্ শূন্য দেখিয়া, অবিরত অশ্রুজলপ্লাবিত-নেত্র হইয়া, এখনও ঘাসের গ্রাস গ্রহণ করে না। (ঙ) যে আশ্রমে রামচন্দ্র, সর্ব্বদা মৃগয়াব্যাপারে লিপ্ত থাকিয়া যে হরিণদিগকে বিনষ্ট করিয়াছিলেন, তাহাদের অবশিষ্ট হরিণগণকর্ত্তৃক উৎসাহিত হইয়াই যেন স্বর্ণমৃগ, (স্বর্ণমৃগরূপধারী মারীচ) সীতাকে প্রতারণা করিয়া রামচন্দ্রকে অতিদূরে নিয়া গিয়াছিল। (চ) যে আশ্রমে, সীতার বিরহদুঃখে

---

(१) तद्रागानुविद्ध...। (२)...किसलं। (३) गम्भीररवं। (४)...निःशेष...

राघवमतिदूरं जहार (ङ)। यत्र मैथिलीवियोगदुःखदुःखितौ दशवदनविनाशपिशुनौ (१) चन्द्रसूर्य्याविव कबन्धग्रस्तौ समं रामलक्ष्मणौ त्रिभुवनभयं महच्चक्रतुः (च)। अत्यायतश्च यस्मिन् दशरथसुतशर-(२) निपातितो योजनबाहोर्बाहुरगस्त्यप्रसादनागत-(३)-नहुषाजगर-कायशङ्कामकरोदृषिजनस्य (छ)। जनकतनया च भर्त्रा विरहविनोदनार्थं-(४) मुटजाभ्यन्तरलिखिता यत्र रामनिवासदर्शनोत्सुका पुनरिव धरणीतलादुल्लसन्ती (५) वनचरैरद्याप्यालोक्यते (६)। (ज))

(च) यत्रेति। मैथिल्याः सीताया वियोगदुःखेन दुःखितौ, दशवदनस्य रावणस्य विनाशपिशुनौ ध्वंससूचकौ रामलक्ष्मणौ, चन्द्रसूर्य्याविव कबन्धेन दनुकबन्धेन राहुणा च, ग्रस्तौ धृतौ कवलीकृतौ च सन्तौ समं युगपत् त्रिभुवनस्य त्रिजगद्वासिनो जनस्य महत् भयं चक्रतुः कृतवन्तौ। अत्रोपमालङ्कारः।

(छ) अत्येति। दशरथसुतस्य रामस्य शरेण बाणेन निपातितश्छित्त्वा पातितः अत्यायतोऽतिदीर्घो योजनबाहोर्दनुकबन्धस्यैव बाहुर्भुजः, अगस्त्यस्य प्रसादनाय शिविकारोहणेन शचीं प्रति गमनसमये चरणप्रहारकृतकोपोपशमाय आगत उपस्थितो यः नहुषाजगरः अजगररूपो नहुषः तस्य कायशङ्कां शरीरभ्रमं। अत्र दनुकबन्धबाहौ नहुषाजगरशरीरभ्रमाद्भ्रान्तिमानलङ्कारः। एषामुपाख्यानानि रामायणारण्यकाण्डे अनुसन्धेयानि।

(ज) जनकेति। यत्राश्रमे, भर्त्रा पत्या रामेण, विरहविनोदनार्थं सीताया वियोगवेदनालघूकरणार्थं उटजाभ्यन्तरे पर्णशालामध्ये लिखिता चित्रिता, जनकतनया तत्प्रतिमूर्त्तिः, रामनिवासस्य रामावस्थानभूमेर्दर्शनाय उत्सुका उत्कण्ठिता सती पुनर्धरणीतलात् पातालात् उल्लसन्ती उत्तिष्ठन्तीव, अद्यापि अस्मिन्नपि समये। वनचरैः शबरैः। अत्र क्रियोत्प्रेक्षालङ्कारः। प्रथमं सीताया मिथिलायां यज्ञभूमिकर्षणसमये धरणीतलादुत्थानं, परीक्षाप्रस्तावे च पातालप्रवेशः, तदर्थं दमुत्थानमिति पुनःशब्दाभिधानं सङ्गच्छते।

দুঃখিত হইয়া রাম ও লক্ষ্মণ, রাহুগ্রস্ত চন্দ্র ও সূর্য্যের ন্যায় দনুকবন্ধকর্ত্তৃক ধৃত হইয়া, রাবণের বিনাশ সূচনা করিয়া যুগপৎ ত্রিভুবনবাসী লোকদিগের অত্যন্ত ভয় জন্মাইয়াছিলেন। (ছ) যে আশ্রমে রামচন্দ্রের শরাঘাতে নিপাতিত, দনুকবন্ধের অতিদীর্ঘ বাহু, অগস্ত্যের ক্রোধ উপশমনের নিমিত্ত উপস্থিত অজগররূপধারী নহুষের শরীর বলিয়া মুনিগণের ভ্রম জন্মাইয়াছিল। (জ) আর যে আশ্রমে রামচন্দ্র সীতার বিরহদুঃখের উপশম করিবার নিমিত্ত, স্বকীয় পর্ণশালার মধ্যে সীতার মূর্ত্তি চিত্রিত করিয়াছিলেন, তাহা দেখিয়া বনচরগণ এখনও মনে করিয়া থাকে যে, সীতাদেবী যেন রামচন্দ্রের বাসস্থান দেখিবার নিমিত্ত উৎকণ্ঠিত হইয়া পুনরায় পাতাল হইতে উঠিতেছেন।

(१) रावणविनाशसूचकौ। (२)...बाण...। (३)...प्रसादनागत...। (४)...विनोदार्थं।
(५) उल्लसन्तीव। (६) उपलक्ष्यते।

तस्य चैवंविधस्य (१) सम्प्रत्यपि प्रकटोपलक्ष्यमाण-पूर्ववृत्तान्तस्यागस्त्याश्रमस्य नातिदूरे जलनिधि-पान-कुपित-वरुणोत्साहितेन (२) अगस्त्यमत्सरात्तदाश्रम-समीपवर्त्त्यपर इव वेधसा महाजलनिधिरुत्पादितः, (झ) प्रलयकाल-विघटिताष्ट-दिग्भाग-(३) सन्धिबन्धं गगनतलमिव भुवि निपतितम्, (ञ) आदिवराह-समुद्धृतधरामण्डल-स्थानमिव सलिल-पूरितम्, (ट) अनवरत-मज्जदुन्मद-शबर-कामिनी-कुचकलस-लुलित-जलम् (ठ) उत्फुल्ल-कुमुद-कुवलय-कह्लारम्, (ड)

---

(झ) तस्येति। प्रकटं उपलक्ष्यमाणा उक्तरूपेण स्पष्टमनुभूयमानाः पूर्ववृत्तान्ता यस्य तस्य। नातिदूरे पम्पाभिधानं सरो वर्त्तत इत्यन्वयः। अत्र प्रथमान्तानि पम्पासरसो विशेषणानि। जलनिधीनां समुद्राणां पानेन कुपितो जलस्वामित्वात् क्रुद्धो यो वरुणस्तेन उत्साहितः अपरं महाजलनिधिमुत्पादयितुं दत्तोत्साहः तेन, वेधसा सृष्टिकर्त्रा, अगस्त्यमत्सरात् अगस्त्यं प्रति विद्वेषात् तस्यागस्त्यस्य आश्रम-समीपवर्त्ती, अपरो महाजलनिधिरिव उत्पादितः अतिविशालत्वादिति भावः। अत्र द्रव्योत्प्रेक्षालङ्कारः।

(ञ) प्रलयेति। प्रलयकाले कल्पान्तसमये विघटिता विश्लिष्टाः स्खलिताः, अष्टानां दिग्भागानां सन्धिबन्धाः संयोजनबन्धनानि यस्य तत्, अतएव भुवि निपतितं गगनतलमिव स्थितं नितान्तनिर्म्मलत्वादति-विशालत्वाच्चेति भावः। अत्रापि द्रव्योत्प्रेक्षालङ्कारः।

(ट) आदीति। आदिवराहेण नारायणस्य तृतीयावतारेण महावराहेण, समुद्धृतं समुत्तोलितं यत् धरा-मण्डलं पृथिवीमण्डलं तस्य स्थानं अवकाशः, सलिलपूरितमिव स्थितं अतिविशालत्वादित्यभिप्रायः। अत्र क्रियोत्प्रेक्षालङ्कारः।

(ठ) अनेति। अनवरतं सर्व्वदा मज्जन्तीनामवगाहमानानां उन्मदानां यौवनगर्व्वितानां शबरकामिनीनां भिल्लस्त्रीणां कुचकलसैः लुलितानि आलोड़ितानि जलानि यस्य तत्। अत्र कुचाः कलसा इव कुचा एव वा कलसा इत्युभयविधसमासस्यापि सम्भवादुपमारूपकयोः सन्देहसङ्करोऽलङ्कारः।

(ड) उत्फुल्लेति। उत्फुल्लानि विकसितानि कुमुदानि श्वेतोत्पलानि कुवलयानि नीलोत्पलानि कह्लाराणि रक्तोत्पलानि च यस्मिन् तत्।

---

(ঝ) সে আশ্রম দেখিলে পূর্ব্ববর্ত্তী ঘটনাবলী স্পষ্টরূপে অনুভূত হয়, এতাদৃশ সেই অগস্ত্যাশ্রমের অনতিদূরে 'পম্পা' নামে এক সরোবর আছে; অগস্ত্য সমুদ্র পান করায় জলাধিপতি বরুণ তাঁহার প্রতি ক্রুদ্ধ হইয়া অপর একটি মহাসমুদ্র সৃষ্টি করিবার জন্য উৎসাহ দিলে বিধাতা, যেন অগস্ত্যের প্রতি বিদ্বেষবশতঃ তাঁহার আশ্রমের নিকটবর্ত্তী অপর একটি মহাসমুদ্র সৃষ্টি করিয়া রাখিয়াছেন বলিয়া প্রতীতি হয়; (ঞ) প্রলয়কালে সকল দিকের সন্ধিবন্ধন স্খলিত হওয়ায় ভূতলনিপতিত আকাশের ন্যায় পম্পাসরোবরকে দেখা যায়; (ট) পম্পাসরোবর দেখিলে বোধ হয় যেন, আদিবরাহ পৃথিবীমণ্ডল উত্তোলন করিয়া নিলে সেই স্থানটি জলদ্বারা পূর্ণ করিয়া রাখা হইয়াছে; (ঠ) অনবরত অবগাহনকারী যৌবনগর্ব্বিত ভিল-রমণীগণের কুচকুম্ভ, পম্পাসরোবরের জল আলোড়িত করিয়া থাকে; (ড) পম্পাসরোবরে শ্বেত,

---

(१) तस्य च सम्प्रत्यपि। (२)...वरुणप्रोत्साहितेन। (३)...विघट्टिताष्टदिग्विभाग...।

उन्निद्रारविन्द-मधुविन्दु-(१) बद्धचन्द्रकम्, (ढ) अलिकुल-पटलान्धकारित-सौगन्धिकम्, (ण) सारसित (२)-समद-सारसम्, (त) अम्बु रुह-मधुपान-मत्त-कलहंसकामिनी-कृत-कोलाहलम्, (थ) अनेक-जलचर-पतङ्गशत-(३) सञ्चलन-चलित-(४) वाचाल-वीचिमालम्, (द) अनिलोल्लासित (५)-कल्लोल-शिशिर-शीकरारब्ध-(६) दुर्दिनम्, (ध) अशङ्कितावतीर्णाभिरम्भः-(७) क्रीड़ारागिणीभिः

---

(ढ) उन्निद्रेति। उन्निद्राणां प्रस्फुटितानां अरविन्दानां पद्मानां मधुविन्दुभिः मकरन्दकणैः बद्धा जलोपरि कृताः चन्द्रका मयूरपिच्छस्थ-चन्द्राकृतिचिह्नविशेषा यस्मिन् तत्।

(ण) अलीति। अलिकुलानां भ्रमरगणानां पटलेन समूहेन अन्धकारितानि आच्छादितानि सौगन्धिकानि कह्लाराणि यस्मिन् तत्। अत्र एकेनैव वक्तव्यनिर्वाहे कुलपटलेति शब्दद्वयाभिधानादधिकपदतादोषः, स चैकतरस्य परित्यागेन परिहरणीयः।

(त) सारसितेति। आरसितेन सह वर्त्तमाना इति सारसिताः सशब्दाः समदा मत्ताः सारसा जलचरपक्षिविशेषा यस्मिन् तत्। अत्र छेकानुप्रासोऽलङ्कारः।

(थ) अम्बु रुहेति। अम्बुरुहाणां पद्मानां मधुपानेन मत्ता याः कलहंसकामिन्यः कलहंस्यस्ताभिः कृतः कोलाहलः कलकलो यस्मिन् तत्।

(द) अनेकेति। अनेकस्य बहुतरस्य जलचराणां पतङ्गानां पक्षिणां शतस्य समूहस्य सञ्चलनेन चलिता, वाचाला शब्दायमाना च वीचिमाला तरङ्गश्रेणिर्यस्मिन् तत्। अत्र वाच वीचीति व्यञ्जनसङ्घस्य सकृत्साम्याच्छेकानुप्रासः।

(ध) अनिलेति। अनिलेन वायुना उल्लासिता उत्थापिता ये कल्लोला महातरङ्गाः तेषां शिशिरशीकरैः शीतलविन्दुभिः आरब्धं प्रवर्त्तितं दुर्द्दिनं मेघाच्छन्नदिनं वृष्टिदिनं यस्मिन् तत् वृष्टिवर्त्तेषामपि पतनादिति भावः। अत्र वृत्त्यनुप्रासोऽलङ्कारः।

(न) अशङ्कितेति। अशङ्कितं निर्जनतया निःशङ्कं यथा स्यात्तथा अवतीर्णाभिः प्रविष्टाभिः, अम्भः-

---

নীল ও রক্ত এই ত্রিবিধ উৎপলই প্রস্ফুটিত হইয়া থাকে; (ঢ) বিকসিত পদ্মের মধুবিন্দু জলের উপরে পতিত হইয়া ময়ূরপুচ্ছস্থ চন্দ্রাকৃতি চিহ্নের ন্যায় চিহ্ন জন্মায়, (ণ) ভ্রমরসমূহ সুগন্ধি রক্তোৎপলসমূহকে আচ্ছাদন করিয়া অবস্থান করে, (ত) সারসপক্ষিগণ আমোদে রব করে, (থ) কলহংসীগণ পদ্মমধুপানে মত্ত হইয়া কোলাহল করে, (দ) বহুতর জলচর পক্ষিসমূহের সঞ্চরণে তরঙ্গশ্রেণী উৎপন্ন হইয়া শব্দ করিয়া থাকে, (ধ) বায়ুর বেগে বড় বড় তরঙ্গ উঠিয়া থাকে, এবং তাহার শীতল জলবিন্দুসমূহ পতিত হইয়া বৃষ্টির দিন করিয়া ফেলে, (ন) জলক্রীড়ার অনুরাগিণী

---

(१)...मधुद्रव, मधुविन्दुनिष्यन्द...। (२) आरसित...। (३)...पतत्त्रिशत...। (४)...चञ्चलित...।
(५) अनिलोल्लसित...। (६) कल्लोलशिखरशीकरारब्ध...। (७) अन्तः।

स्नानसमये वनदेवताभिः केशपाशकुसुमैः (१) सुरभीकृतम्, ( न ) एकदेशावतीर्ण-मुनिजनापूर्य्यमाण-कमण्डलु-कल-जलध्वनि-मनोहरम्, ( प ) उन्मिष-(२) दुत्पल-वन-मध्यचारिभिः सवर्णतया रसितानुमेयैः कादम्बकदम्बकै-(३) रासेवितम्, (फ) अभिषेकावतीर्ण-पुलिन्दराज-सुन्दरी-(४) कुच-चन्दनधूलि-धवलित-तरङ्गम्, (५) (ब) उपान्त-जात-केतकी-( ६ ) रजःपटल-बद्ध-कूल-पुलिनम्, ( भ ) आसन्नाश्रमागत-

---

क्रीडायां जलखेलायां रागिणीभिः उत्कटेच्छाशालिनीभिः वनदेवताभिः वनाधिष्ठातृदेवीभिः स्नानसमये केश-पाशानां कुसुमैः सुरभीकृतं सुगन्धीकृतम् ।

(प) एकेति। एकदेशे एकस्मिन् पार्श्वे अवतीर्णैः अन्तःप्रविष्टैः मुनिजनैः आपूर्य्यमाणा ये कमण्डलवः तेषां कलैरव्यक्तमधुरैः जलध्वनिभिः जलपूरणशब्दैः मनोहरं सुन्दरम् ।

(फ) उन्मिषदिति। उन्मिषतो विकसतः उत्पलवनस्य श्वेतोत्पलकाननस्य मध्ये चरन्तीति तैः, अतएव सवर्णतया श्वेतोत्पलकादम्बकदम्बकयोः समानवर्णतया रसितेन शब्देन अनुमेयैरनुमानज्ञेयैः नतु पृथक्तया चाक्षुषप्रत्यक्षयोग्यैरिति भावः, कादम्बकदम्बकैः कलहंसगणैः आसेवितं आश्रितम् । अत्र रसितानु-मेयैरित्यनेन मीलितालङ्कारो व्यज्यत इति वस्तुना अलङ्कारध्वनिः ।

(ब) अभिषेकेति। अभिषेकाय स्नानाय अवतीर्णा जलमध्यप्रविष्टा याः पुलिन्दराजस्य किरातपतेः सुन्दर्य्यो रमण्यः तासां ये कुचाः स्तनाः तेषां चन्दनधूलिभिः लिप्त शुष्क-मलयजरजोभिः धवलिताः श्वेतवर्णी-कृताः तरङ्गा यस्य तत् । अत्र धवलीकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ।

(भ) उपान्तेति। उपान्ते जलसमीपे जातानां उत्पन्नानां केतकीनां केतकीपुष्पाणां रजःपटलैः पराग-समूहैः बद्धं निर्म्मितं कूले कूलसमीपे पुलिनं सैकतं यस्य तत् । अत्रापि पूर्व्ववदतिशयोक्तिरलङ्कारः ।

(म) आसन्नेति। आसन्नेभ्यो निकटवर्तिभ्य आश्रमेभ्य आगतैस्तापसैस्तपस्विभिः क्षालितानां धौतानां

---

বনদেবীগণ স্নানের সময়ে নিঃশঙ্কচিত্তে জলমধ্যে প্রবেশ করিয়া কেশপাশস্থিত কুসুমসমূহে সরোবরের জল সৌরভময় করিয়া থাকেন, (প) মুনিগণ একদিকে জলমধ্যে প্রবেশ করিয়া জলদ্বারা কমণ্ডলু পূরণ করিতে লাগিলে তাহার অব্যক্ত মধুরশব্দে চিত্ত আকর্ষণ করে, ( ফ ) কলহংসগণ প্রস্ফুটিত কুমুদবনমধ্যে বিচরণ করে, কিন্তু সেই কলহংসগণের ও কুমুদবনের সমান শ্বেতবর্ণ বলিয়া কলহংসগণকে পৃথক্‌ভাবে প্রত্যক্ষ করিতে না পারিলেও রব শুনিয়া অনুমান করা যায়, ( ব ) কিরাতরাজের ভার্য্যাগণ স্নান করিবার জন্য জলমধ্যে প্রবেশ করিলে তাহাদের স্তনলিপ্ত চন্দনের ধূলি প্রসারিত হইয়া তরঙ্গশ্রেণীকে শ্বেতবর্ণ করিয়া থাকে, ( ভ ) জলের নিকটে উৎপন্ন কেতকীকুসুমের পরাগসমূহ জলে পতিত হইয়া তীরের নিকটে পুলিন ( বালুকাময়, চড়া ) বন্ধন করিয়া থাকে, ( ম ) নিকটবর্ত্তী আশ্রম হইতে তপস্বিগণ আসিয়া

---

(१) केशकुसुमैः । (२) उन्मिषित:.... । (३) कादम्बैः । (४)...शबरी... । (५)...धवलिततरम् ।
(६) उपान्तकेतकी··· ।

तापस-क्षालिताद्र्र-वल्कल-कषाय-पाटल-तट-जलम्, (म) उपतट-विटपि-(१) पल्लवपुटानिल-वीजितम्, (य) अविरल-तमाल-वीथिकान्धकारिताभिः (२) (र) वालिनिर्वासितेन सञ्चरता प्रतिदिनमृष्यमूकवासिना सुग्रीवेणावलुप्त-फल-लघु-(३) लताभिः (ल) उदवासि-तापसानां देवतार्च्चनोपयुक्त-कुसुमाभिः (व) उत्पत-

---

आर्द्राणां क्लिन्नानां सद्यश्छित्त्वा आनीतत्वेन निर्यासनिर्गमादिति भावः, वल्कलानां परिधेयतरुत्वचां कषायैः निर्यासैः पाटलं श्वेतरक्तं तटजलं तीरसमीपजलं यस्य तत्, तीरसमीप एव क्षालनादिति भावः। "कषायः सुरभौ रसे" इति त्रिकाण्डशेषः।

(य) उपेति। उपतटे तटसमीपे ये विटपिनो वृक्षास्तेषां पल्लवपुटानां अनिलैर्वायुभिः वीजितं स्वस्पर्शविशिष्टीकृतम्।

(र) अविरलेति। अविरला घना या तमालवीथिका तमालतरुश्रेणी तया अन्धकारिताभिः अन्धकारविशिष्टीकृताभिः। इतः प्रभृति तृतीयाबहुवचनान्तपदानि वनराजिभिरिति वक्ष्यमाणस्य विशेषणानि।

(ल) वालिना वानरराजेन निर्वासितः राजधानीतो वहिष्कृतः तेन, प्रतिदिनं सञ्चरता तत्रागच्छता, ऋष्यमूके पर्वते वसतीति तेन, सुग्रीवेण वालिभ्रात्रा अवलुप्तानि आहृतानि फलानि याभ्यः ताः, अतएव लघवः फलभारहीना लता यासु ताभिः।

पुरा किल मायावी नाम कश्चन दानवो वालिना सुग्रीवेण च सह युध्यमानस्तयोः प्रहारैः परमदुर्व्बलीभूतो विलमेकं प्राविशत्। वाली तु तत्रैव स्थातुं सुग्रीवमादिश्य स्वयं तं निहन्तुं तद्विलमेव प्रविष्टः। सुग्रीवस्तु वालिन उत्थाने विलम्बं विलमुखाच्च रुधिरमुद्गतमवलोक्य 'वाली निहत' इति मन्यमानस्तद्विलमुखे वृहन्तं पाषाणमेकं निधाय किष्किन्धायामागत्य वालिराज्यं जग्राह। अथ तु वाली मायाविनं निहत्यागत्य विलमुखे पाषाणमवलोक्य पदाघातेन तमपसार्य्य उत्थाय किष्किन्धामागत्य सुग्रीव-दुरभिसन्धिं बुध्यमानस्तं किष्किन्धातो निष्काशयामास। सुग्रीवस्तु गत्वा ऋष्यमूकपर्व्वते वसतिञ्चकारेति रामायणम्।

(व) उदेति। उदके वसन्तीत्युदवासिनश्च ते तापसाश्चेति तेषां। "उदकस्योदः पेषवासवाहनादिषु" इति उदकशब्दस्योदादेशः। देवतार्च्चनेषु उपयुक्तानि यावन्ति आवश्यकानि तावन्तीत्यर्थः कुसुमानि यासु ताभिः।

---

বৃক্ষ হইতে সদ্য আনীত বল্কল প্রক্ষালন করেন, তখন সেই বল্কলের কষ নির্গত হইয়া তীরের নিকটবর্ত্তী জলকে পাটলবর্ণ করিয়া ফেলে ; (য) তীরসমীপস্থ নানাবিধ বৃক্ষ-জাত পল্লবসমূহের বায়ু জলের উপর ব্যজন করে ; (র) নিবিড় বনশ্রেণী পম্পাসরোবরের তীরদেশ অবরুদ্ধ করিয়া রহিয়াছে ; ঘন ঘন তমালবৃক্ষগণ সেই তীরস্থ বনকে অন্ধকার করিয়া রাখিয়াছে ; (ল) বানররাজ বালী কিষ্কিন্ধ্যা হইতে সুগ্রীবকে নির্ব্বাসিত করিলে সুগ্রীব ঋষ্যমূকপর্ব্বতে বাস করত প্রতিদিন এই বনে আসিয়া নানাবিধ ফল আহরণ করেন, তাহাতে লতাসকল ভারহীন হইয়া ঐ বনশ্রেণীতে অবস্থান করে ; (ব) জলমধ্যে অবস্থানপূর্ব্বক তপস্যাকারী মুনিগণের দেবতা-

---

(१)...वृक्षपल्लवानिल...। (२)...वीथ्यन्धकारिताभिः। (३) परिलघु...।

जलचर-पतङ्ग-पक्षपुट-विगलित-जलविन्दु-सेक-सुकुमार-किसलयाभिः (श) लता-मण्डपतल-शिखण्डि-मण्डलारब्ध-ताण्डवाभिः (ष) अनेक-कुसुम-परिमल-वाहिनी-भिर्वनदेवताभिः श्वास-(१) वासिताभिरिव वनराजिभिरुपरुद्ध-(२) तीरम्, (स) अपरसागरशङ्किभिः सलिलमादातुमवतीर्णैर्जलधरैरिव बहलपङ्कमलिनैर्वनकरि-भिरनवरतमापीयमानसलिलम्, (३) (ह) अगाधमनन्तमप्रतिमं (४) अपां निधानं पम्पाभिधानं पद्मसरः। (क्ष)

(श) उत्पतदिति। उत्पततां उड्डीय गच्छतां जलचराणां पतङ्गानां पक्षिणां पक्षपुटेभ्यो विगलितै-र्जलविन्दुभिर्यः सेकः सेचनं तेन सुकुमाराणि विशेषकोमलानि किसलयानि पल्लवानि यासां ताभिः।

(ष) लतेति। लतामण्डपतलेषु लतावृतस्थानमध्येषु शिखण्डिमण्डलेन मयूरसमूहेन आरब्धं प्रवर्त्तितं ताण्डवं नृत्यं यासु ताभिः। अत्र वृत्त्यनुप्रासोऽलङ्कारः।

(स) अनेकेति। अनेकेषां नानाविधानां कुसुमानां परिमलान् सौरभाणि वहन्तीति तच्छीलास्ताभिः, अतएव वनदेवताभिः कर्त्रीभिः श्वासेन श्वासवायुना वासिताभिः सुरभीकृताभिरिव स्थिताभिः, तासां श्वासस्य सुरभित्वादिति भावः। वनराजिभिः वनश्रेणीभिः उपरुद्धानि व्याप्तानि तीराणि यस्य तत्, पम्पासरसो विशेषणमेतत्। अत्र क्रियोत्प्रेक्षालङ्कारः।

(ह) अपरेति। 'अयं अपरः सागरः' इति शङ्कन्ते भ्रान्तिं कुर्वन्तीति तैः, जलधरैर्मेघैरिव। बहल-पङ्कैर्गात्रलग्नप्रचुरकर्द्दमैर्मलिनास्तैः। आपीयमानानि सलिलानि जलानि यस्य तत्। अत्र जलधरजाति-स्वरूपोत्प्रेक्षालङ्कारः।

(क्ष) अगाधमिति। अगाधं अतलस्पर्शं, अनन्तं शेषरहितं अतिवृहदित्यर्थः, अप्रतिमं उपमारहितं, अपां जलानां निधानं निधिस्वरूपं अनन्तजलशालित्वादिति भावः, पम्पा इत्यभिधानं नाम यस्य तत्, पद्मा-नामाकरीभूतं सरः पद्मसरः। पूर्वमस्यैव पम्पासरसस्तीरजातत्वेन फलविशेषस्य 'पम्पा' 'पेंपे' इति वङ्ग-प्रचलितं नाम मन्यन्ते स्वानुमानमात्रनिर्णीयमानभुवनवृत्तान्ताः खल्विदानीन्तनाः केचन जनाः।

পূজাতে প্রয়োজনীয় সমস্ত কুসুমই ঐ বনশ্রেণীতে আছে ; ( শ ) জলচর পক্ষিগণ উপর দিয়া উড়িয়া যাইবার সময় তাহাদের পাখা হইতে নির্গত জলবিন্দু পতিত হওয়ায় ঐ বনের পল্লবগুলি আরও কোমল হইয়া থাকে ; ( ষ ) ঐ বনের লতামণ্ডপমধ্যে ময়ূরগণ নৃত্য করিয়া থাকে ; ( স ) নানাজাতীয় পুষ্পের সৌরভ বহন করায় ঐ তীরস্থ বনশ্রেণী যেন বনদেবতাগণের শ্বাসবায়ুতে সৌরভময় হইয়াছে বলিয়া প্রতীতি হয় ; ( হ ) অপর সমুদ্রভ্রমে জল গ্রহণ করিবার জন্ম সরোবর-মধ্যে প্রবিষ্ট মেঘসমূহের ন্যায়, গাত্রে প্রচুর কর্দ্দম সংলগ্ন হওয়ায় মলিন-বর্ণ বন্য হস্তিসমূহ সর্ব্বদা সেই সরোবরের জল পান করে ; ( ক্ষ ) আর পম্পাসরোবর অতলস্পর্শ, অতিবৃহৎ, তুলনারহিত, অক্ষয়জলসমন্বিত এবং পদ্মের আকরস্থান।

(१) वनदेवतानिःश्वास, वनदेवताभिः स्वश्वासः...। (२) रुद्ध...। (३) आपीयमानम्। (४) अप्रतिष्ठं।

(यत्र च विकच-कुवलय-प्रभा-श्यामायमान-पक्षपुटान्यद्यापि मूर्त्तिमद्रामशाप-ग्रस्तानीव मध्यचारिणामालोक्यन्ते (१) चक्रवाकनाम्नां (२) मिथुनानि। (क))

तस्यैव पद्मसरसः (३) पश्चिमे तीरे राघव-शर-प्रहार-जर्जरित-जीर्ण-तालतरु-षण्डस्य (४) च समीपे दिग्गज-करदण्डानुकारिणा जरदजगरेण सततमावेष्टित-मूलतया बद्धमहालवाल इव (ख) तुङ्ग-स्कन्धावलम्बिभिरनिलवेल्लितैरहिनिर्म्मोकै-

---

(क) यत्रेति। यत्र पम्पासरसि। विकचानां विकसितानां कुवलयानां नीलोत्पलानां प्रभाभिः द्युतिभिः श्यामायमानानि समीपसञ्चरणात् श्यामलवदाचरन्ति पक्षपुटानि येषां तानि। मध्यचारिणां पम्पा-सरोवरमध्ये विचरणकारिणां चक्रवाकनाम्नां पक्षिणां मिथुनानि युगलानि, अद्यापि मूर्त्तिमता रामशापेन दाशरथेरभिसम्पातेन ग्रस्तानि गृहीतानीव आलोक्यन्ते तत्र स्थितैर्जनैरिति शेषः। श्यामायमानपक्षपुटत्वा-दिति भावः।

अत्र क्रियोत्प्रेक्षालङ्कारः। "मालिन्यं व्योम्नि पापे" इति कविसमयप्रसिद्धिवशेन पापस्य मलिनतया वर्णनीयत्वात् शापस्य च पापजन्यतया तत्तुल्यतयैव वर्णनौचित्यात् श्यामायमानपक्षपुटतया रामशापग्रस्तानीवे-त्युत्प्रेक्षितमिति बोध्यम्।

पुरा किल पम्पासरसीतीरे सीतावियोगविकलं राममवलोक्य चक्रवाका हसन्ति स्म। रामस्तु तदव-लोक्य "ममेव युष्माकमपि यामिन्यां प्रियावियोगो भविष्यती"ति शशाप इत्याधिवेश्वरामायणवार्त्ता।

(ख) तस्यैवेति। राघवस्य रामस्य शरप्रहारेण जर्जरितानां विदारितानां जीर्णानां पुरातनानां ताल-तरूणां तालवृक्षाणां षण्डस्य समूहस्य समीपे महान् जीर्णः शाल्मलीवृक्षोऽस्तीति वक्ष्यमाणेनान्वयः। अत्र प्रथमान्तपदानि शाल्मलीवृक्षस्य विशेषणानि। पुरा किल रामचन्द्रस्य वालिवधोपयोगि बलमस्ति नवेति परीक्षार्थं सुग्रीवेण प्रेरितो रामचन्द्र एकेनैव शरेण श्रेणीवद्धान् सप्त तालतरून् विभेद इति रामायणम्। दिग्गजस्य करदण्डं शुण्डादण्डं अनुकर्त्तुं शीलं यस्य तेन, तद्वद्वृहतेत्यर्थः, जरन् वृद्धो योऽजगरस्तदाख्यो वृहत् सर्पस्तेन। बद्धं निर्म्मितं महत् आलवालं मूले जलरक्षणार्थखातस्य कृतपरिवेष्टनं यस्य स तादृश इव। अत्र दिग्गजेत्यत्र आर्थी समासगता लुप्तोपमा, आलवालबन्धनोत्प्रेक्षणात् क्रियोत्प्रेक्षा च अनयोरङ्गाङ्गिभावेन सङ्करः।

---

(ক) যে পম্পাসরোবরে প্রস্ফুটিত নীলোৎপলসমূহের প্রভাদ্বারা পক্ষপুট শ্যামবর্ণ হইয়া গেলে মধ্যবর্ত্তী চক্রবাক-নামক পক্ষিগণকে অদ্যাপি রামচন্দ্রের মূর্ত্তিমান্ অভিশাপগ্রস্তের ন্যায় দেখা যায়।

(খ) সেই পদ্মাকর পম্পাসরোবরের পশ্চিমতীরে, রামচন্দ্রের শরপ্রহারে জর্জ্জরিত পুরাতন তালবৃক্ষ সমূহের নিকটে পুরাতন বৃহৎ এক শাল্মলীবৃক্ষ আছে। দিক্‌হস্তীর শুণ্ডের ন্যায় বৃহৎ ও প্রাচীন এক অজগর সর্প সেই শাল্মলী বৃক্ষের মূলদেশ বেষ্টন করিয়া থাকায় যেন প্রকাণ্ড আলবাল নির্ম্মাণ করিয়া রাখা হইয়াছে বলিয়া প্রতীতি হয়; (গ) সর্পকঞ্চুক, (সাপের খোলস,

---

(१) मध्यचारिणआलोक्यन्ते। (२) चक्रनाम्नां। (३) तस्यैवविधस्य सरसः। (४) तालतरुखण्डस्य।

धृतोत्तरीय इव (ग) दिक्चक्रवाल-परिमाणमिव गृह्णता भुवनान्तरालविप्रकीर्णेन शाखासञ्चयेन प्रलयकाल-ताण्डव-प्रसारित-भुजसहस्रमुडुपतिशेखर-(१)मिव विडम्बयितुमुद्यतः, (घ) पुराणतया पतनभयादिव गगनस्कन्ध-(२) लग्नः, (ङ) निखिल-शरीर-व्यापिनीभिरतिदूरोन्नताभिर्जीर्णतया शिराभिरिव परिगतो व्रततिभिः, (च) जरातिलकविन्दुभिरिव कण्टकै-(३) राचिततनुः, (छ) इतस्ततः

(ग) तुङ्गेति। तुङ्गं उच्चं स्कन्धं प्रकाण्डदेशं अंसदेशञ्च अवलम्बितुं आश्रित्य लम्बमानीभवितुं शील येषां तैः, अनिलविलसितैर्वायुकम्पितैः अहिनिर्म्मोकैः सर्पकञ्चुकैः धृतोत्तरीय इव गृहीतोत्तरीयवसन इव। अत्रापि पूर्ववदुत्प्रेक्षालङ्कारः।

(घ) दिगिति। दिक्चक्रवालस्य सकलदिङ्मण्डलस्य परिमाणं इयत्तापरिमितिं गृह्णतेव बुध्यमानेनेव अथवा कुर्वतेव, भुवनान्तराले जगन्मध्ये विप्रकीर्णः समन्ताद्विस्तारितस्तेन, शाखासञ्चयेन, प्रलयकाले यत् ताण्डवं उद्धतनृत्यं तत्र प्रसारितं समन्ताद्विस्तारितं भुजसहस्रं बहुतरबाहवो येन तं उडुपतिर्नक्षत्रेशश्चन्द्रः शेखरः शिरोभूषणं यस्य तं महादेवं विडम्बयितुं अनुकर्त्तुमुद्यतः प्रवृत्त इव। अत्र प्रथमा क्रियोत्प्रेक्षा, द्वितीया चार्थोपमा, तृतीयापि क्रियोत्प्रेक्षा, इत्थं तेषामङ्गाङ्गिभावेन सङ्करः।

(ङ) पुराणेति। पुराणतया प्राचीनतया। यथा कश्चित् प्राचीनो जनः पतनभयादपरस्य स्कन्धमवलम्ब्य तिष्ठति तद्वदिति भावः। अत एवात्र कार्य्येण शाल्मलीवृक्षे प्राचीनजनव्यवहारसमारोपात् समासोक्तिरलङ्कारः हेतूत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः।

(च) निखिलेति। अतिदूरोन्नताभिः अतिदूरोत्थिताभिः, वार्द्धक्ये नातिरिक्तमुद्गताभिश्च। जीर्णतया वार्द्धक्येन शिराभिर्धमनीभिरिव व्रततिभिर्लताभिः, परिगतः परिव्याप्तः। अत्र वृद्धकालोत्पन्नतदीयशिराभिरिवेति तात्पर्य्यादुत्प्रेक्षैवालङ्कारः। केचित्तु वृद्धकालोत्पन्नमानवीयशिराभिरिवेत्यर्थं मन्यमाना उपमामाचक्षते।

(छ) जरेति। जरायां वार्द्धक्ये ये तिलकविन्दवः सर्वदेहेषु जायमानाः कृष्णवर्णाश्चिह्नविशेषास्तैरिव कण्टकैः आचिता व्याप्ता तनुः शरीरं यस्य सः। अत्रापि पूर्ववदुत्प्रेक्षैवालङ्कारः। उपमेति केचित्।

বা খোস) তাহার উচ্চ স্কন্ধদেশে লম্বিত থাকিয়া বায়ুবেগে সঞ্চালিত হওয়ায় সেই শাল্মলীবৃক্ষ যেন স্কন্ধে উত্তরীয় বসন ধারণ করিয়া রহিয়াছে বলিয়া বোধ হয়; (ঘ) শাখাসমূহ চতুর্দ্দিকে বিস্তীর্ণ হইয়া 'দিঙ্মণ্ডল কত দূর আছে' তাহার যেন পরিমাণ করিতেছে, তাহাতে সেই শাল্মলীবৃক্ষ, প্রলয়কালীন ভয়ঙ্কর নৃত্যের সময় চতুর্দ্দিকে অসংখ্য বাহুপ্রসারণকারী মহাদেবের যেন অনুকরণ করিতে প্রবৃত্ত হইয়াছে বলিয়া বোধ হয়; (ঙ) আর প্রাচীন বলিয়া পতিত হইবার ভয়েই যেন সেই শাল্মলীবৃক্ষ আকাশের স্কন্ধদেশ অবলম্বন করিয়া রহিয়াছে; (চ) বার্দ্ধক্য-নিবন্ধন শিরাসমূহের ন্যায় অবস্থিত, সর্ব্বশরীরব্যাপী এবং অতিদূরে উত্থিত লতা সমূহ সেই শাল্মলীবৃক্ষকে বেষ্টন করিয়া রহিয়াছে; (ছ) বৃদ্ধকালে সর্ব্বশরীরে উৎপন্ন কৃষ্ণবর্ণ চিহ্নসকলের ন্যায় কণ্টক সমূহ তাহার সর্ব্বাঙ্গব্যাপী হইয়া রহিয়াছে; (জ) সমুদ্রের জল পান করিয়া

(१) उडुपतिशकलशेखरमिव। (२) पवनस्कन्ध,…वायुस्कन्ध…। (३) निजकण्टकैः।

परिपीतसागरसलिलै-(१) र्गगनागतैः पतत्रथैरिव शाखान्तरेषु (२) निलीयमानैः क्षणमम्बुभारालसैरार्द्रीकृतपल्लवैर्जलधरपटलैरप्यदृष्टशिखरः, (३) (ज) तुङ्गतया (४) नन्दनवनश्रियमिवावलोकयितुमभ्युद्यतः, (झ) समीप-(५) वर्त्तिनामुपरि सञ्चरतां गगनतल-(६) गमनखेदायासितानां रविरथतुरङ्गमाणां सृक्कपरिस्रुतैः फेनपटलैः सन्देहित-तूलराशिभिर्धवलीकृतशिखरशाखः, (ञ) वनगज-कपोल-कण्डूयन-लग्न-मद-(७) निलीन-मत्त-मधुकरमालेन लोहशृङ्खलाबन्धननिश्चलेनेव (८) कल्पस्थायिना मूलेन समुपेतः, (ट) कोटराभ्यन्तरनिविष्टैः स्फुरद्भिः (९)

(ज) इत इति। परिपीतानि सागराणां सलिलानि जलानि यैस्तैः, इतस्ततः समन्ततः, गगनागतैः आकाशमार्गेणोपस्थितैः, पतत्रथैः पक्षिभिरिव "पतत्पतत्रथाण्डजाः" इत्यमरः, शाखानां अन्तरेषु अभ्यन्तरेषु क्षणं निलीयमानैः प्रच्छन्नैः, अम्बुभारेण पीतजलभरेण अलसैर्मन्दगामिभिः, आर्द्रीकृतानि दृष्ट्या स्तिमितानि पल्लवानि अधःकिसलयानि यैस्तैः, जलधरपटलैः मेघवृन्दैरपि न दृष्टं अत्युच्चे स्थिततया नावलोकितं शिखरं शीर्षं यस्य सः। अत पतत्रथैरिवेत्युपमा, तथा जलधरपटलानां शिखरदर्शनसम्बन्धेऽपि तदसम्बन्धोक्तेरतिशयोक्तिश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः। अतिशयोक्त्या चात्युच्चत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

(झ) तुङ्गेति। तुङ्गतया उच्चतया नन्दनवनश्रियं इन्द्रोपवनशोभाम्। अत क्रियोत्प्रेक्षालङ्कारः।

(ञ) समीपेति। गगनतले गमनेन यः खेदः परिश्रमस्तेन आयासितानां खिन्नानां रविरथतुरङ्गमाणां सूर्यरथनियुक्तघोटकानां सृक्कभ्यां ओष्ठप्रान्ताभ्यां परिस्रुतैर्गलितैः, सन्देहितः 'अयमेतद्यजातस्तूलराशिर्न वा' इत्यमात्मनि संशयविषयीकृतस्तूलराशिर्यैस्तैः, फेनपटलैः शुभ्रलालासमूहैः, धवलीकृताः शिखरशाखा अग्रवर्त्तिन्यः शाखा यस्य सः। अत्र तादृशफेनपटलैः शिखरशाखानां धवलीकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः। तेन चात्युच्चत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

(ट) वनेति। वनगजानां कपोलयोः कण्डूयनेन लग्नेषु मदेषु दानजलेषु निलीना अवस्थिता मत्ता मधुपानमत्ता मधुकरमाला भ्रमरश्रेणिर्यस्मिन् तेन, अतएव लोहशृङ्खलया यद्बन्धनं तेन निश्चलं स्थिरं तेनेव

নানাদিক্ হইতে আকাশমার্গে উপস্থিত, পক্ষিগণের ন্যায় শাখাসমূহের অভ্যন্তরে ক্ষণকাল প্রচ্ছন্নভাবে অবস্থিত এবং জলভারে মন্দগামী মেঘসমূহও বৃষ্টির জলে নিম্নবর্ত্তী পল্লবসমূহকে আর্দ্র করিয়া থাকে, কিন্তু অগ্রভাগ দেখিতে পায় না ; (ঝ) সেই শাল্মলীবৃক্ষ অতিশয় উচ্চতানিবন্ধন যেন নন্দনকাননের শোভা দেখিবার জন্য উন্নত হইয়াছে ; (ঞ) নিকটবর্ত্তী হইয়া উপরিভাগে বিচরণকারী এবং সর্ব্বদা আকাশগমনের পরিশ্রমে ক্লান্ত সূর্য্যরথনিযুক্ত ঘোটকগণের ওষ্ঠপ্রান্ত হইতে নির্গত ফেনসমূহ তুলরাশির সংশয় জন্মাইয়া সেই শাল্মলীবৃক্ষের উপরের শাখাসমূহকে শুভ্রবর্ণ করিয়া থাকে ; (ট) তাহার মূলদেশে গণ্ড-কণ্ডূয়নের সময় বন্য

(१)…जलैः। (२) शाखान्तरेषु। (३)…शिखरदेशः। (४) उत्तुङ्गतया। (५) स्वसमीप…। (६) अम्बरतल…। (७) मदसलिल…। (८) बन्धनिश्चलेनेव। (९) पतद्भिः।

सजीव इव मधुकरपटलैः, (ठ) दुर्योधन इवोपलक्षित-शकुनिपक्षपातः, (ड) नलिननाभ इव (१) वनमालोपगूढ़ः, (ढ) नवजलधरव्यूह इव नभसि दर्शितो-न्नतिः, (२) (ण) अखिलभुवनतलावलोकनप्रासाद इव वनदेवतानाम्, अधि-पतिरिव दण्डकारण्यस्य, नायक इव सर्ववनस्पतीनाम्, सखेव विन्ध्यस्य, शाखा-

---

सता, कल्पस्थायिना प्रलयकालपर्य्यन्तस्थायिना। अत्र पदार्थहेतुकं काव्यलिङ्गं गुणोत्प्रेक्षा चानयोरङ्गाङ्गि-भावेन सङ्करः।

(ठ) कोटरेति। कोटराभ्यन्तरे गात्रस्थविवरमध्ये निविष्टैरवस्थितैः स्फुरद्भिः स्पन्दमानैः मधुकर-पटलैर्भ्रमरसमूहैः सजीवः सजीवन इव प्राणविशिष्ट इवेत्यर्थः अभ्यन्तरे प्राणवद्भ्रमराणामविरतस्पन्दनादिति भावः। अत्र गुणोत्प्रेक्षालङ्कारः; तेन च मधुकरपटलमेव जीवनमिति निरङ्गकेवलरूपकालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः।

(ड) दुर्योधन इति। दुर्योधनो धृतराष्ट्रज्येष्ठपुत्र इव, उपलक्षितो लोकैर्दृष्टः शकुनीनां पक्षिणां पक्षैः पतत्रैः पातः पतनं यत्र सः, अन्यत्र तु उपलक्षितो लोकैर्दृष्टः शकुनौ गान्धारराजे पक्षपातः प्रणयो यस्य सः। अत्र पूर्णोपमालङ्कारः।

(ढ) नलिनेति। नलिनं पद्मं नाभौ यस्य स नारायण इव, वनमालया अरण्यश्रेण्या उपगूढः संश्लिष्टः, पक्षे "आजानुलम्बिनी माला सर्वर्त्तुकुसुमोज्ज्वला। मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्त्तिता।" इति शब्दमालाधृतलक्षणया स्रजा उपगूढ़ आलिङ्गितः। पूर्णोपमा।

(ण) नवेति। नवजलधरव्यूहो नूतनमेघसमूह इव, नभसि आकाशे दर्शिता उन्नतिः उच्चता येन सः, अन्यत्र तु नभसि श्रावणे मासि दर्शिता उन्नतिर्वृद्धिर्येन सः। पूर्णोपमा।

(त) अखिलेति। अखिलभुवनतलानां सर्वजगतां अवलोकनप्रासाद इव निरीक्षणाय राजगृहमिव अत्युच्चत्वादिति भावः। अधिपतिरिव प्रधानत्वादित्याशयः। सर्ववनस्पतीनां सर्वविधवृक्षाणां "वनस्पतिर्वृक्षमात्रे

---

হস্তিগণের মদজল সংলগ্ন হইয়া যায়, তাহার উপরে মত্ত ভ্রমরগণ উপবিষ্ট হইলে বোধ হয়, যেন লৌহশৃঙ্খলে বদ্ধ থাকায় মূলদেশ নিশ্চল হইয়া প্রলয়কাল পর্য্যন্ত থাকিবে; (ঠ) ভ্রমরসমূহ কোটর-মধ্যে থাকিয়া বিচরণ করায় সেই শাল্মলীবৃক্ষকে সজীব বলিয়া প্রতীতি হয়; (ড) দুর্য্যোধনের যেমন শকুনির প্রতি পক্ষপাত দৃষ্ট হইত, সেই শাল্মলীবৃক্ষেও তেমন পক্ষিগণের পক্ষ-পাত (পক্ষদ্বারা অবতরণ) দৃষ্ট হয়; (ঢ) শাল্মলীবৃক্ষ নারায়ণের ন্যায় বনমালায় পরিবেষ্টিত; (ণ) মেঘসমূহ যেমন শ্রাবণ মাসে আপনাদের উন্নতি (বৃদ্ধি) দেখায়, শাল্মলীবৃক্ষও তেমন আকাশে নিজের উন্নতি (উচ্চতা) দেখাইয়া থাকে; (ত) সমগ্র ভূমণ্ডল নিরীক্ষণ করিবার জন্য বনদেবতাগণের অত্যুচ্চ প্রাসাদের (মনুমেণ্টের) ন্যায়, দণ্ডকারণ্যের অধিপতির ন্যায়, সকল

---

(१) पद्मनाभ इव। (२) कृतोन्नतिः।

बाहुभिरुपगुह्येव (१) विन्ध्याटवीमवस्थितो (२) महान् जीर्णः शाल्मली-वृक्षः (त)।

(तत्र च शाखाग्रेषु कोटरोदरेषु पल्लवान्तरेषु स्कन्धसन्धिषु जीर्णवल्कल-(३) विवरेषु च महावकाशतया विस्रब्धविरचितकुलायसहस्राणि दुरारोहतया विगलितविनाशभयानि (४) नानादेशसमागतानि शुकशकुनिकुलानि प्रति-वसन्ति स्म। (थ) यैः परिणामविरलदलसंहति-(५) रपि स वनस्पति-रविरलदलनिचयश्यामल (६) इवोपलक्ष्यते दिवानिशं निलीनैः। (द))

---

विनापुष्पफलद्रुमे" इति विश्वः, नायकः प्रभुरिव, अत्रापि प्रधानत्वादित्यभिप्रायः। विन्ध्यस्य पर्वतस्य सखेव तत्समानतुङ्गत्वादिति भावः। एषु प्रत्येकं जात्युत्प्रेक्षालङ्कारः। शाखा एव बाहवस्तैः विन्ध्याटवीं उपगुह्येव आलिङ्ग्येव अवस्थितः। अत्र निरङ्गकेवलरूपकक्रियोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः।

(थ) तत्रेति। कोटरोदरेषु गात्रस्थविवराभ्यन्तरेषु। स्कन्धसन्धिषु प्रकाण्डसंयोगस्थानेषु रुचती वृक्ष-विटपानामुत्पत्तिदेशेष्वित्यर्थः। महान् अवकाशः अन्तर्विस्तारो येषां तेषां भावस्तया, विस्रब्धं सविश्वासं निःशङ्कं यथा स्यात्तथा विरचितं निर्मितं कुलायसहस्रं नीड़समूहो यैस्तानि। दुःखेन अत्यन्ततुङ्गत्वात् कष्टेन आरुह्यत इति दुरारोहस्तस्य भावस्तया, विगलितं चित्तात् विच्युतं विनाशभयं व्याधादिभ्यो मरणभयं येषां तानि। शुकाः कीराः शकुनयस्तद्भिन्नाः पक्षिणः तेषां कुलानि समूहाः।

(द) यैरिति। दिवानिशं निलीनैः सर्वदावस्थितैः यैः शुकशकुनिकुलैः, परिणामेन प्राचीनतया जीर्ण-तयेत्यर्थः विरला अल्पा दलसंहतिः पत्रसमूहो यस्मिन् स तादृशोऽपि तरुणतरुवन्नूतनपत्राणां घनभावेनोत्-पत्त्यभावात् पुरातनपत्राणाञ्च क्रमशो ह्रासादिति भावः, स वनस्पतिः शाल्मलीवृक्षः, अविरलदलनिचयेन घन-पत्रसमूहेन श्यामलः श्यामवर्ण इव उपलक्ष्यते लोकैर्दृश्यते, तत्र तत्रावस्थितानां शुकशकुनीनां पत्रवत् श्यामलत्वादिति भावः। अत्र गुणोत्प्रेक्षालङ्कारः।

---

বৃক্ষের প্রভুর ন্যায় এবং বিন্ধ্যপর্ব্বতের সখার ন্যায় সেই শাল্মলীবৃক্ষ স্বকীয় শাখা-বাহুদ্বারা যেন বিন্ধ্যাটবীকে আলিঙ্গন করিয়া অবস্থান করিতেছে।

(থ) সেই শাল্মলীবৃক্ষে শাখার অগ্রে, কোটরের অভ্যন্তরে চতুর্দ্দিকের পল্লবের মধ্যে, বৃহৎ বৃহৎ শাখার সন্ধিস্থলে এবং জীর্ণবল্কলস্থ বিবরের মধ্যে বিস্তৃত স্থান থাকায় নিঃশঙ্কভাবে কুলায় (বাসা) নির্ম্মাণ করিয়া, নানা স্থান হইতে আগত শুক, শারিকা ও অন্যান্য পক্ষিগণ, তাহাতে অন্যের আরোহণ করা দুঃসাধ্য বলিয়া মরণ-ভয় পরিত্যাগপূর্ব্বক বাস করিত।

(দ) প্রাচীনতানিবন্ধন অল্প অল্প পত্র থাকিলেও, যে সকল পক্ষিগণের দিবারাত্রি অবস্থান করায় সেই বৃক্ষকে ঘন ঘন পত্রসমূহ দ্বারা শ্যামবর্ণের ন্যায় দেখা যাইত।

---

(१) उपगृह्येव, अवगुह्येव। (२) स्थितः। (३)...वल्क...। (४) विगतविनाशभयानि, विगतभयानि। (५) विरलसंहतिः, विरलदलसन्ततिः। (६) श्यामः।

ते च तस्मिन् वनस्पतावतिवाह्यातिवाह्य रजनीमात्मनीड़ेषु (१) प्रतिदिन-मुत्थायोत्थायाहारान्वेषणाय नभसि विरचितपङ्क्तयो मदकल-हलधर-हलमुखोत्-क्षेप-(२) विकीर्णबहुस्रोतसमम्बरतले कलिन्दकन्यामिव दर्शयन्तः, (ध) सुर-गजोन्मूलित-विगलदाकाशगङ्गा-कमलिनीशङ्कामुपजनयन्तः, (३) (न) दिवस-कर-रथ तुरग-प्रभानुलिप्तमिव गगनतलमुपपादयन्तः (४) (प) सञ्चारिणीमिव मरकतस्थलीं विड़म्बयन्तः, (फ) शैवलपल्लवावलीमिवाम्बरसरसि प्रसारयन्तः,

---

(ध) त इति। ते शुकशकुनयः। विचरन्ति स्म इति परेणान्वयः। अत्र प्रथमान्तानि ते इति तच्छब्दोपस्थापितपक्षिणां विशेषणानि। आत्मनीड़ेषु स्वस्वकुलायेषु। नभसि आकाशे विरचितपङ्क्तयः निबद्ध-श्रेणयः। मदकलो मद्यपानमत्तो यो हलधरो बलरामस्तस्य हलमुखेन लाङ्गलाग्रभागेन य उत्क्षेप उपरि क्षेपणं तेन विकीर्णानि विक्षिप्तानि बहूनि स्रोतांसि यस्यास्तां, कलिन्दकन्यां यमुनामिव अम्बरतले आकाशे दर्शयन्तः प्रकटयन्तः। अत्र यमुनाद्रव्यस्वरूपोत्प्रेक्षालङ्कारः। अस्येतिहासस्तु पूर्वमुक्तः।

(न) सुरेति। सुरगजेन ऐरावतेन उन्मूलिता उत्पाटिता अतएव विगलन्ती निपतन्ती या आकाशगङ्गाया मन्दाकिन्याः कमलिनी पद्मिनी तस्याः शङ्कां आत्मसु परेषां भ्रमं उपजनयन्तः कुर्वन्तः समान-श्यामलत्वादिति भावः। अतएवात्र भ्रान्तिमानलङ्कारः।

(प) दिवसेति। गगनतलमाकाशं, दिवसकरस्य सूर्य्यस्य ये रथतुरगाः हरिद्वर्णरथनियुक्तघोटकाः तेषां प्रभाभिः हरिद्वर्णाभिः कान्तिभिः अनुलिप्तं खचितमिव उपपादयन्तः कुर्वन्तः, स्वप्रभाभिरिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः।

(फ) सञ्चेति। सञ्चारिणीं गमनशीलां मरकतस्थलीं नीलमणिभूमिं विड़म्बयन्तः अनुकुर्वन्त इव, स्वेषामपि नीलत्वादिति भावः। अत्रापि क्रियोत्प्रेक्षालङ्कारः।

(ब) शैवलेति। अम्बरमाकाशमेव सरः निर्म्मलत्वाद्विस्तृतत्वाच्च सरोवरः तत्र शैवलपल्लवावलीं शैवाल-

---

(ध) সেই সকল পক্ষিগণ প্রতিদিন সেই শাল্মলীবৃক্ষে নিজ নিজ বাসাতে থাকিয়া, রাত্রি অতিবাহিত করিয়া, প্রাতঃকালে উঠিয়া খাদ্যবস্তু অন্বেষণের নিমিত্ত আকাশে শ্রেণীবদ্ধভাবে বিচরণ করিত; তখন মদ্যপানমত্ত বলরামের লাঙ্গলদ্বারা আকর্ষণে বিকীর্ণপ্রবাহ যমুনার ন্যায় আকাশে সেই পক্ষিশ্রেণীকে দেখা যাইত; (ন) আর শ্রেণীবদ্ধ হইয়া আকাশে বিচরণকারী সেই পক্ষিগণ, ঐরাবতকর্ত্তৃক উন্মূলিত হইয়া পতনশীল আকাশগঙ্গাজাত পদ্মলতার ভ্রম জন্মাইত; (প) আপনাদের হরিদ্বর্ণ দেহকান্তি প্রকাশিত হওয়ায়, সূর্য্যের রথে নিযুক্ত অশ্বগণের প্রভাদ্বারাই যেন আকাশকে রঞ্জিত করিত; (ফ) গমনশীল মরকতভূমির অনুকরণ করিত;

---

(१) आत्मनो नीड़ेषु। (२)...बलभद्रहलमुखाक्षेप...। (३) उत्पादयन्तः। (४) प्रदर्शयन्तः।

(व) गगनवितते: (१) पक्षपुटैः कदलीदलैरिव दिनकर-खर-कर-निकर-(२) परिखेदितान्याशामुखानि वीजयन्तः, (भ) वियति विसारिणीं (३) शष्पवीथी-मिवारचयन्तः, (म) सेन्द्रायुधमिवान्तरिक्षमादधाना विचरन्ति स्म शुक-शकुनयः (४) (य)।

(कृताहाराश्च पुनः प्रतिनिवृत्यात्मकुलायावस्थितेभ्यः शावकेभ्यो विविधान् फलरसान् कलममञ्जरी-(५)-विकारांश्च प्रहत-हरिण-रुधिरानुरक्त-शार्दूलनख-कोटिपाटलेन चञ्चुपुटेन दत्त्वा (६) अधरीकृत-सर्वस्नेहेनासाधारणेन गुरुणापत्य-प्रेम्णा तस्मिन्नेव (७) क्रोड़ान्तर्निहिततनयाः क्षपाः (८) क्षपयन्ति स्म। (र))

---

पल्लवश्रेणीं प्रसारयन्तो विस्तारयन्त इव आत्मनां शैवालपल्लववत् हरिद्वर्णत्वात्, क्षुद्र-क्षुद्रत्वाच्चेति भावः। अत्र निरङ्गकेवलरूपकक्रियोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः।

(भ) गगनेति। कदलीदलैरिव रम्भापत्रैरिव हरिद्वर्णत्वादिति भावः, गगनवितते: आकाशे प्रसारितैः पक्षपुटैः, दिनकरस्य सूर्य्यस्य यः खरकरनिकरः तीक्ष्णकिरणसमूहः तेन परिखेदितानि सन्तापितानि आशामुखानि दिङ्मुखानि वीजयन्तः स्वजातवायुस्पर्शविशिष्टानि कुर्वन्तः। अत्र उपमालङ्कारः।

(म) वियतीति। वियति गगने विसारिणीं दीर्घां शष्पवीथीं नूतनतृणश्रेणीं आरचयन्तो निर्म्मिमाणा इव तृणश्रेणीवत् स्वश्रेण्या अपि हरिद्वर्णत्वाद्दीर्घत्वाच्चेति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः।

(य) सेन्द्रेति। अन्तरिक्षमाकाशं सेन्द्रायुधं शक्रधनुःसहितमिव आदधानाः कुर्वाणाः, स्वश्रेण्या नानावर्णमयत्वादिति भावः। अत्र गुणोत्प्रेक्षालङ्कारः।

(र) कृतेति। कलमानां धान्यविशेषाणां मञ्जरीविकारान् मञ्जरीस्थित-तण्डुलरूपविकारान्। प्रहतस्य विनाशितस्य हरिणस्य मृगस्य रुधिरेण रक्तेन अनुरक्ता लोहितीकृता या शार्दूलनखकोटिः व्याघ्रनखराग्रभागः तद्वत् पाटलेन श्वेतरक्तेन। अत्र लुप्तोपमालङ्कारः। अधरीकृतः निम्नवर्त्तीकृतः खर्वीकृतः सर्वः स्नेहः सन्तानेतरगतसकलवात्सल्यं येन तेन, अतएव असाधारणेन अन्यस्नेहैरसमानेन गुरुणा महता अपत्यप्रेम्णा

---

(ব) আকাশ-সরোবরে যেন শৈবাল-(সেওলা) পল্লবশ্রেণী বিস্তারিত করিত; (ভ) কদলী-পত্রের ন্যায় আকাশে বিস্তৃত পক্ষপুটদ্বারা, সূর্য্যের প্রখর কিরণসমূহে সন্তাপিত দিক্ সকলের মুখে বায়ু সঞ্চালিত করিত; (ম) আকাশে বিস্তৃত নূতন তৃণশ্রেণী যেন নির্ম্মাণ করিত; (য) এবং আকাশকে যেন ইন্দ্রধনুসমন্বিত করিয়া চলিত।

(র) তাহারা, আহারসমাধানপূর্ব্বক পুনরায় প্রতিনিবৃত্ত হইয়া, নিহত হরিণের রুধিরে রঞ্জিত ব্যাঘ্রনখাগ্রের ন্যায় পাটলবর্ণ চঞ্চুপুটদ্বারা, নিজ নিজ বাসাতে অবস্থিত শাবকদিগকে নানাবিধ ফলের রস ও কলমধান্যের তণ্ডুল সমর্পণ করিয়া, অন্যান্য সকল স্নেহ অপেক্ষা প্রবল ও

---

(१) गगनावततै:। (२) दिनकरकरनिकर...। (३) विस्तारिणीं। (४) क्वचित् 'शुकशकुनय' इति पाठो नास्ति। (५) कलमफलविकारान्। (६) दत्त्वा दत्त्वा। (७) स्वस्मिन्नेव। (८) सुखं क्षपाः।

(एकस्मिंश्च जीर्णकोटरे जायया सह निवसतः (१) पश्चिमे वयसि वर्त्तमानस्य कथमपि पितुरहमेवैको (२) विधिवशात् सूनुरभवम्। (ल) अतिप्रबलया चाभिभूता ममैव जायमानस्य प्रसववेदनया जननी मे लोकान्तरमगमत्। अभिमतजायाविनाशदुःखितोऽपि खलु तातः सुतस्नेहादन्तर्निगृह्य (३) पटुप्रसरमपि शोक-(४) मेकाकी मत्संवर्द्धनपर एवाभवत् (व)। अतिपरिणतवयाश्च (५) कुशचीरानुकारिणीमल्पावशिष्ट-जीर्ण-पिच्छजाल-जर्जरां (६) अवस्रस्तांसदेशशिथिलां (७) अपगतोत्पतनसंस्कारां पक्षसन्ततिं (८) उद्वहन्, (श)

---

सन्तानवात्सल्येन, तस्मिन्नेव शाल्मलीवृक्षे, क्रोडानां उत्सङ्गानां अन्तर्निहिता मध्येषु स्थापिताः तनया अपत्यानि येषां, शुकशकुनयः क्षपा रात्रीः क्षपयन्ति स्म अतिवाहयन्ति स्म।

(ल) एकस्मिन्निति। जायया भार्य्यया। पश्चिमे परवर्त्तिनि वयसि वार्द्धक्य इत्यर्थः। कथमपि महता क्लेशेन। विधिवशात् दैवाधीनत्वात्। सूनुः पुत्रः।

(व) अतीति। अन्तर्निगृह्य हृदयमध्ये अवरुध्य। पटुस्तीव्रः प्रसरो वेगो यस्य तं दारुणमपीत्यर्थः। मत्संवर्द्धनपर एव मम परिपोषणे यत्नवानेव।

(श) अतीति। अतिपरिणतं अतिवृद्धं वयो यस्य सः। कुशचीरानुकारिणीं कुशनिर्म्मित-जीर्ण-वस्त्रतुल्यां। अत्रार्थीयमुपमा। अल्पं वार्द्धक्येन चरणात् स्तोकमात्रं अवशिष्टं यत् जीर्णं पिच्छजालं शीर्णबर्हसमूहः तेन जर्ज्जरां विशीर्णां। अवस्रस्ते वार्द्धक्यादवनतीभूते अंसदेशे स्कन्धस्थाने शिथिलां अदृढावयवसंयोगाम्। अपगतो विनष्टः उत्पतनसंस्कार उड्डयनशक्तिर्यस्यास्ताम्; पक्षसन्ततिं पतत्रसमूहं उद्वहन् धारयन्।

---

অতুলনীয় গুরুতর সন্তানস্নেহবশতঃ সন্তানদিগকে ক্রোড়ের মধ্যে রাখিয়া সেই শাল্মলীবৃক্ষেই রাত্রি অতিবাহিত করিত।

(ল) আমার বৃদ্ধ পিতা একটি জীর্ণকোটরে ভার্য্যার সহিত বাস করিতেন, অদৃষ্টবশতঃ অতিকষ্টে আমিই তাঁহাদের একমাত্র পুত্র জন্মিয়াছিলাম; (ব) আমারই জন্মকালীন অত্যন্ত প্রসববেদনায় আক্রান্ত হইয়া আমার জননী পরলোক গমন করিলেন। তখন আমার পিতা, মনোমত ভার্য্যার মরণে অত্যন্ত দুঃখিত হইয়াও পুত্রস্নেহবশতঃ সেই দারুণ শোক হৃদয়মধ্যে অবরুদ্ধ রাখিয়া একাকী আমার পরিপোষণেই যত্নবান্ হইলেন। (শ) আমার অতিবৃদ্ধ পিতার পক্ষদ্বয়, কুশনির্ম্মিত জীর্ণবস্ত্রের তুল্য হইয়া গিয়াছিল, লোমসকল জীর্ণ ও অল্পমাত্র অবশিষ্ট থাকায় পক্ষদ্বয় বিশীর্ণ হইয়াছিল এবং অবনত স্কন্ধদেশে শিথিল হইয়া পড়িয়াছিল,

---

(१) तत्र निवसतः। (२) अहमेकः। (३) अभ्यन्तरे निरुध्य। (४) शोकवेगं।
(५) अतिपरिणततया च। (६) जर्जरीं। (७) स्रस्तांसदेशां। (८) पक्षसंहतिं।

उपारूढकम्पतया ( १ ) सन्तापकारिणीमङ्गलग्नां जरामिव विधुन्वन्, (ख) अक-ठोर-शेफालिकाकुसुम-नाल-पिञ्जरेण कलममञ्जरी-दलन-मसृणित-क्षीणोपान्त-लेखेन (२) स्फुटिताग्रकोटिना चञ्चुपुटेन ( ग ) परनीड़निपतिताभ्यः (३) शालि-वल्लरीभ्यस्तण्डुलकणानादायादाय तरु-(४) मूलनिपतितानि च शुककुलावदलि-तानि फलशकलानि समाहृत्य परिभ्रमितुमशक्तो मह्यमदात् (५)। प्रतिदिवस-मात्मना च मदुपभुक्तशेषं (६) अकरोदशनम्। ( घ ))

---

( ख ) उपेति। उपारूढो वार्द्धक्येन स्वभावत एवोत्पन्नः कम्पः कम्पनं यत्र सा तथोक्ता तस्या भाव-स्तया, सन्तापकारिणीं दुःखोत्पादिकां इच्छानुसारेण सञ्चालयितुमशक्यत्वादिति भावः, अङ्गलग्नां देहस्थितां जरां वृद्धावस्थामिव विधुन्वन् तामेव पक्षसन्ततिं कम्पयन् सञ्चाल्य किञ्चिद्गच्छन्नित्यर्थः।। अत्रोत्प्रेक्षालङ्कारः।

( ग ) अकठोरेति। अकठोरस्य कोमलस्य शेफालिकाकुसुमस्य यत् नालं वृन्तं तद्वत् पिञ्जरेण पिङ्गलवर्णेन। अत्र लुप्तोपमालङ्कारः। कलममञ्जरीणां धान्यविशेषशिखानां दलनेन खण्डनेन मसृणिता श्लक्ष्णीकृता क्षीणा क्षयं गता च उपान्तलेखा प्रान्तसमीपरेखा यस्य तेन। तथा स्फुटिता क्षयं गता अग्रकोटिः अग्रिमतीक्ष्णभागो यस्य तेन।

( घ ) परेति। परेषामन्येषां पक्षिणां नीड़ेभ्यो या निपतितास्ताभ्यः शालिवल्लरीभ्यः धान्यमञ्जरीभ्यः। शुककुलेन कीरसमूहेन अवदलितानि खण्डयित्वा भूतले पातितानि फलशकलानि फलखण्डानि। मह्यं वैशम्पायनाय अदात् भोक्तुमर्पितवान्। आत्मना च स्वयञ्च। मया उपभुक्तस्य खादितस्य शेषमवशिष्टं अशनं भोजनं अकरोत् मदुपभुक्तशेषं प्राप्य तेन अशनमकरोदित्यर्थः।

---

সুতরাং তাহাদ্বারা উড়িবার ক্ষমতা ছিল না ; (খ) তথাপি তিনি, স্বভাবতই কম্প উৎপন্ন হওয়ায় ক্লেশদায়ক, দেহলগ্ন জরার ন্যায় সেই পক্ষযুগলকেই সঞ্চালন করিয়া সামান্য গমনাগমন করিতেন। (গ) তাঁহার চঞ্চুপুট, কোমল শেফালিকাকুসুমের বৃন্তের ন্যায় পিঙ্গলবর্ণ হইয়া গিয়াছিল; আর ধান্যমঞ্জরী খণ্ড করায় সেই চঞ্চুপুটের শেষভাগের রেখাগুলি, মসৃণ ( পালিস ) ও ক্ষীণ হইয়াছিল এবং তাঁহার অগ্রের তীক্ষ্ণভাগও ক্ষয়প্রাপ্ত হইয়াছিল। (ঘ) তিনি অন্যত্র ভ্রমণ করিতে অসমর্থ বলিয়া সেই চঞ্চুপুটদ্বারা, অন্যপক্ষীর বাসা হইতে নিপতিত ধান্যের মঞ্জরী হইতে তণ্ডুলকণা আহরণ করিয়া এবং অন্য শুকপক্ষিগণ চঞ্চুদ্বারা খণ্ডন করিয়া যাহা বৃক্ষমূলে ফেলিয়া দিয়াছে, সেই সকল ফলখণ্ড আনয়ন করিয়া ভোজন করিবার নিমিত্ত আমাকে দিতেন আর প্রতিদিন আমার ভোজনাবশিষ্ট যাহা থাকিত, তাহাই নিজে ভোজন করিতেন।

---

(१)...कम्पतया च। (२) क्षीणोपान्तलेखेन। (३)...पतिताभ्यः।
(४) तरु...। (५) मह्यमाहारमदात्। (६) मदुपयुक्तशेषं।

एकदा तु प्रभातसन्ध्यारागलोहिते गगने च (१) कमलिनी-मधुरक्त-(२) पक्षसम्पुटे वृद्धहंस इव मन्दाकिनीपुलिनादपर-जलनिधि-तटमवतरति चन्द्रमसि, (च) परिणत-रङ्कु-रोम-पाण्डुनि व्रजति विशालतामाशाचक्रवाले, (क) गज-रुधिर-रक्त-हरिसटा-लोहिनीभिः प्रतप्त-लाक्षिक-(३) तन्तु-पाटलाभिरायामिनीभिः अशिशिरकिरणदीधितिभिः पद्मरागशलाकासम्मार्जनीभिरिव (४) समुत्सार्य्यमाणे गगनकुट्टिमकुसुमप्रकरे तारागणे, (ख) सन्ध्यामुपासितुमुत्तराशा-

(च) एकदेति। एकदा तु स्पष्टे जाते प्रत्यूषसि मृगयाकोलाहलध्वनिरुदचरदिति परेणान्वयः। प्रभातसन्ध्यारागेण प्रातःसन्ध्यारक्तिम्ना लोहिते रक्तवर्णे। इदन्तु गगने चन्द्रमसीत्युभयोरपि विशेषणं तदानीं तथैव सम्भवात्, तेन च गगने चेति चकारोपादानं। अतएव कमलिन्याः पद्मिन्याः मधुना रक्तवर्णमकरन्देन रक्तं रञ्जितं पक्षसम्पुटं पतत्रयुगलं यस्य तस्मिन्, वृद्धहंस इव प्राचीनकलहंस इव, मन्थरगतित्वात्तथाय वृद्धपदं। चन्द्रमसि चन्द्रे मन्दाकिनीपुलिनात् आकाशगङ्गासैकतात् अपरजलनिधितटं पश्चिमसमुद्रतीरं अवतरति अवरोहति सति। अत्रोपमालङ्कारः।

(क) परिणतेति। परिणतस्य वृद्धस्य रङ्कोर्हरिणविशेषस्य रोमवत् लोमवत् पाण्डुनि पीतशुभ्रे "पाण्डुस्तु पीतभागार्द्धः केतकीधूलिसन्निभः।" इति शब्दार्णवः। परिणतपदं रङ्कोः परिणतावस्थायामेव तादृशपाण्डुरोमतासम्भवप्रदर्शनार्थम्। आशाचक्रवाले दिङ्मण्डले, विशालतां अन्धकारापगमाद्विस्तारं व्रजति गच्छति सति। अत्र लुप्तोपमालङ्कारः।

(ख) गजेति। गजस्य स्वयं मारितस्य हस्तिनः रुधिरेण रक्तेन रक्ता, लोहितवर्णा या हरिसटा सिंहजटा तद्वल्लोहिनीभिः रक्तवर्णाभिः। अत्र रुधिररक्तशब्दयोरर्थस्यापाततः पुनरुक्तताप्रतीतेः परस्तोक्तरूपभेदावगमात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः लुप्तोपमा चानयोरङ्गाङ्गिभावेन सङ्करः। लोहिनीति "श्वेतैतहरितलोहितेभ्यस्तो नः" इति तकारस्य नकारः। प्रतप्ता उष्णीकृता ये लाक्षिकतन्तवः लाक्षानिर्म्मितसूत्राणि तद्वत् पाटलाभिः श्वेतरक्ताभिः। अत्र लुप्तोपमा। आयामिनीभिर्दीर्घाभिः। अशिशिरकिरणस्य उष्णरश्मेः सूर्य्यस्य दीधितिभिः किरणैः, पद्मरागस्य मणेः याः शलाकास्ताभिर्निर्म्मिता याः सम्मार्जन्यस्ताभिरिव स्थिताभिः। अत्र जात्युत्प्रेक्षालङ्कारः। गगनमेव कुट्टिमं बद्धभूमिस्तस्य कुसुमप्रकरः पुष्पसमूहस्तस्मिन् तारागणे नक्षत्र-

(क्ष) একদিন প্রভাতকালে মৃগয়ার কোলাহল উঠিল। সেই সময়ে গগনতল ও চন্দ্রমণ্ডল সন্ধ্যারাগে রক্তবর্ণ হইয়াছিল; পদ্মমধুরঞ্জিত-পক্ষশালী বৃদ্ধ কলহংসের ন্যায় চন্দ্র, আকাশগঙ্গার পুলিন (চড়া) হইতে পশ্চিম সমুদ্রের তীরে অবতীর্ণ হইতেছিল; (ক) বৃদ্ধ রঙ্কুমৃগের লোমের ন্যায় পাণ্ডুবর্ণ দিঙ্মণ্ডল, অন্ধকার অপসৃত হওয়ায় বিস্তৃত হইতে লাগিল; (খ) হস্তীর রক্তে রঞ্জিত সিংহের জটার ন্যায় লোহিতবর্ণ অথবা উত্তপ্ত লাক্ষাসূত্রের ন্যায় পাটলবর্ণ সূর্য্যের কিরণ, পদ্মরাগমণির শলাকানির্ম্মিত সম্মার্জ্জনীর ন্যায় আকাশরূপ ভূমি হইতে নক্ষত্ররূপ কুসুম-

(१) गगनतले, गगनतल...। (२) मध्वनुरक्त...। (३) आतप्तलाक्षिक, उत्तप्तलाक्ष, आनन्तलाक्षा···।
(४) सम्मार्जनीभिः समुत् ...।

वलम्बिनि मानससरस्तीरमिवावतरति सप्तर्षिमण्डले, (ग) तटगत-विघटित-(१) शुक्ति-सम्पुट-विप्रकीर्णमरुणकर-प्रेरणाधोगलितमुड़ गणमिव मुक्ताफलनिकरमुद्वहति धवलितपुलिन-(२) मुदन्वति पूर्व्वेतरे, (घ) तुषारविन्दुवर्षिणि विबुद्धशिखिकुले विजृम्भमाणकेशरिणि करिणी-कदम्बक प्रबोध्यमान-समदकरिणि (३) चपाजल-जड़-केसरं कुसुमनिकरमुदयगिरि-शिखरस्थितं (४) सवितारमिवोद्दिश्य पल्लवाञ्जलिभिः समुत्सृजति कानने, (ङ) रासभ-रोम-धूसरासु वनदेवताप्रासा-

---

समूहे समुत्सार्य्यमाणे दूरीक्रियमाणे सति। अत्र गगने कुट्टिमत्वारोपस्तारागणे कुसुमप्रकरत्वारोपस्य निमित्तमिति परम्परितरूपकमलङ्कारः।

(ग) सन्ध्यामिति। उत्तराशावलम्बिनि उत्तरदिगवस्थिते सप्तर्षिमण्डले नक्षत्रभूते मरीच्यादिदेवर्षिगणे सन्ध्यामुपासितुमिव प्रातःसन्ध्यां कर्त्तुमिव मानससरस्तीरं मानससरोवरतटं अवतरति अवरोहति सति। तदानीं सप्तर्षिमण्डलस्य उत्तरस्यामस्तगमनादियमुक्तिः। अत्र क्रियोत्प्रेक्षालङ्कारः। मरीचिः, अत्रिः, अङ्गिराः, पुलस्त्यः, पुलहः, क्रतुः, प्रचेताः, भृगुः, वसिष्ठः, नारदश्चेति दश देवर्षयः सप्तर्षिपदवाच्याः, नित्यसमासत्वादेवावयवार्थनैरपेक्ष्येण विशेषार्थप्रतिपत्तिः कृष्णसर्पादिवत्। तथा च शब्दशक्तिप्रकाशिकायां जगदीशतर्कालङ्काराः—

"विभक्तिमात्रप्रक्षेपान्निजान्तर्गतनामसु। स्वार्थस्याबोधबोधाभ्यां नित्यानित्यौ समासकौ।"

(घ) तटेति। पूर्वेतरे उदन्वति पश्चिमे समुद्रे पूर्वः समुद्र इतरो यस्मात् स पूर्वेतरस्तस्मिन् बहुव्रीहिसमासान्न सार्वनामिककार्य्यं। तटगतेषु तीरस्थितेषु विघटितेषु स्फुटितेषु प्रसारितभागद्वयेषु शुक्तिसम्पुटेषु मुक्तास्फोटावरणेषु मध्ये विप्रकीर्णं असंसक्तभावेनावस्थितं, धवलितं स्वप्रभया शुभ्रीकृतं पुलिनं सैकतं येन तं, अरुणकरैः सूर्य्यरश्मिभिर्या प्रेरणा नोदनं तया अधोगलितं भूतलपतितं उडुगणं नक्षत्रपुञ्जमिव मुक्ताफलनिकरं मौक्तिकसमूहं उद्वहति धारयति सति। अत्र जातिस्वरूपोत्प्रेक्षालङ्कारः।

(ङ) तुषारेति। अत्र सप्तम्यन्तानि काननविशेषणानि। तुषारविन्दून् रात्रिपतितशिशिरकणान् वर्षति पत्राग्रश्रेणिभ्यः पातयतीति तस्मिन्। विबुद्धं जागरितं शिखिकुलं मयूरसमूहो यत्र तस्मिन्।

---

সমূহকে অপসারিত করিতে লাগিল; (গ) উত্তরদিকে অবস্থিত সপ্তর্ষিমণ্ডল প্রাতঃসন্ধ্যা করিবার জন্যই যেন মানসরোবরের তীরে অবতরণ করিতে লাগিলেন; (ঘ) পশ্চিম সমুদ্রের তীরে শুক্তিকাপুটক উন্মীলিত হইলে (ঝিনুক দুইটার ভিতর ফাঁক হইলে) তাহার মধ্যবর্ত্তী মুক্তাসমূহ স্বকীয় কিরণে পুলিনদেশকে (বালির চড়াকে) শ্বেতবর্ণ করিয়া প্রকাশিত হইলে বোধ হইতে লাগিল, যেন সূর্য্যরশ্মির তাড়নায় নক্ষত্রপুঞ্জ ভূতলে পতিত হইয়াছে; (ঙ) বনমধ্যে বৃক্ষের পত্র হইতে শিশিরবিন্দু পতিত হইতে লাগিল, ময়ূরগণ জাগরিত হইল, সিংহগণ জাগিয়া

---

(१)...विघट्टित...। (२) ..पुलिनतटं, पुलिनतलं।

(३)...मानमदकरिणि स्पष्टे च जाते प्रभाते। (४) स्थितसवितारं।

दानां तरूणां शिखरेषु पारावतमालायमानासु धर्म्मपताकास्विव (१) समुच्छ्रिय-न्तीषु तपोवनाग्निहोत्रधूमलेखासु, (छ) अवश्यायशीकरिणि लुलितकमलवने रति-(२) खिन्न-शबर-सीमन्तिनी-स्वेदजलकणा-(३) पहारिणि वनमहिष-रोमन्थ-फेनविन्दु वाहिनि चालित-पल्लव-लता-लास्योपदेश-व्यसनिनि विघटमान-कमल-षण्ड-(४) मधु-शीकरासार-वर्षिणि कुसुमामोदतर्पितालिजाले निशावसानजात-

---

विजृम्भमाणा अचिरनिद्राभङ्गेन जृम्भाकारिणः केशरिणः सिंहा यत्र तस्मिन्। करिणीकदम्बकेन हस्तिनी-समूहेन प्रबोध्यमानाः स्वैरविहारार्थं शुण्डाकर्षणेन जागर्य्यमाणाः समदा मदजलस्राविणः करिणो यत्र तस्मिन्, एवम्भूते कानने वने, क्षपाया रात्रेः जलेन हिमसलिलेन जड़ाः स्तिमिताः केशराः किञ्जल्का यस्य तं, कुसुमनिकरं स्वजातपुष्पसमूहं उदयगिरिशिखरस्थितं उदयाचलशृङ्गे विद्यमानं सवितारं सूर्य्यं उद्दिश्येव अभिप्रे-त्येव पल्लवान्येवाञ्जलयस्तैः समुत्सृजति प्रक्षिप्य ददति सति। अत्र क्रियोत्प्रेक्षा, निरङ्गकेवलरूपकं, समान-कार्य्येण कानने कुसुमार्घ्येण सूर्य्योपस्थानकर्त्तुः कस्यचिद्व्यवहारसमारोपात् समासोक्तिश्च इत्येतेषामङ्गाङ्गिभावेन सङ्करः।

(च) रासभेति। रासभरोमवत् गर्द्दभलोमवत् धूसरासु धूम्रवर्णासु। वनदेवतानां प्रासादा उच्चत्वा-द्धिस्तृतत्वाच्च अट्टालिकारूपा ये तरवो वृक्षास्तेषां शिखरेषु अग्रदेशेषु पारावतमालावत् कपोतश्रेणीवत् आचरन्तीषु संसक्तास्विति पारावतमालायमानासु, तपोवनेषु यानि अग्निहोत्राणि "सायं प्रातर्जुहोति" इति श्रुतेर्मुनीनां अग्निहोत्रहोमास्तेषां धूमलेखासु धूमराजिषु, धर्म्मपताकास्विव धर्म्मोद्घोषणार्थवैजयन्तीष्विव समुच्छ्रयन्तीषु उद्गच्छन्तीषु सतीषु। अत्र लुप्तोपमा, निरङ्गकेवलरूपकं, कथङ्गतोपमा, जातिस्वरूपोत्प्रेक्षा च इत्येतेषामङ्गाङ्गिभावेन सङ्करः।

(छ) अवश्यायेति। अवश्यायशीकराः शिशिरविन्दवः अस्य सन्तीति तस्मिन्, इत्यादीनि सप्तम्यन्तानि मातरिश्वनि इति वक्ष्यमाणस्य विशेषणानि। लुलितं कम्पितं कमलवनं पद्मवनं येन तस्मिन्, रति-खिन्नानां सुरतपरिश्रान्तानां शबरसीमन्तिनीनां भिल्लरमणीनां स्वेदजलकणान् घर्म्मवारिविन्दून् अपहरति स्वस्पर्शेन नाशयतीति तस्मिन् तथोक्ते। अनेन विशेषणत्रितयेन शैत्य-सौगन्ध्य-मान्द्यरूपगुणत्रितयशालित्वं वायोः सूचितम्। वनमहिषाणां रोमन्थेषु उद्गीर्य्य चर्व्वणेषु ये फेनविन्दवस्तान् वहतीति तस्मिन्। चलि-

---

হাই তুলিতে লাগিল, হস্তিনীগণ মদস্রাবী হস্তীদিগকে জাগাইতে লাগিল, নানাবিধ বৃক্ষগণ পল্লবরূপ অঞ্জলিদ্বারা উদয়াচলের উপরিভাগস্থিত সূর্য্যকে যেন উদ্দেশ করিয়া, রাত্রির শিশির-জলসিক্ত স্বকীয় কুসুমসমূহ নিক্ষেপ করিতে লাগিল; (চ) গর্দ্দভের লোমের ন্যায় ধূসরবর্ণ তপোবনস্থ অগ্নিহোত্রযাগের ধূমসমূহ, বনদেবতাগণের অট্টালিকাস্বরূপ উচ্চ বৃক্ষ-সমূহের উপরি-ভাগে কপোতগণের ন্যায় সংলগ্ন হইয়া ধর্ম্মপতাকার ন্যায় ঊর্দ্ধে উত্থিত হইতে লাগিল; (ছ) শিশিরবিন্দু বহন করিয়া, পদ্মবন কাঁপাইয়া, পরিশ্রান্ত শবররমণীগণের ঘর্ম্মবিন্দু বিলুপ্ত

---

(१) पताकासु। (२) रत...। (३)...स्वेदजलकणिका, स्वेदकणिका...। (४)...खण्ड।

जड़िम्नि मन्दमन्दसञ्चारिणि प्रवाति प्राभातिके मातरिश्वनि, (छ) कमलवन-प्रबोध-(१) मङ्गलपाठकानां इभगण्डडिण्डिमानां मधुलिहां (२) कुमुदोदरेषु घटमान-(३) दलपुट-निरुद्ध-(४) पतत्रसंहतीनामुच्चरत्सु हुङ्कारेषु, (५) (ज) प्रभात-शिशिर-मारुताहत-(६) सुप्तप्त-जतुरसाश्लिष्ट-पक्ष्ममालमिव (७) सशेषनिद्राजिह्मित-

---

तानां निजवेगेन कम्पितानां पल्लवानां लतानाञ्च यत् लास्यं चाञ्चल्यरूपं नृत्यं तस्य उपदेशे शिक्षादाने व्यसन-मासक्तिरस्यास्तीति तस्मिन्। विघटमानस्य विकसतः कमलषण्डस्य पद्मसमूहस्य मधुशीकराणां मकरन्दबिन्दूनां आसारं धारासम्पातं वर्षति क्षिपतीति तस्मिन्। कुसुमामोदेन पुष्पसौरभेण तर्पितं सन्तोषितं अलिजालं भ्रमरसमूहो येन तस्मिन्। निशावसाने रात्रिशेषे जातो जड़िमा जड़त्वं शिशिरजलसौरभवहनादिना भार-वत्त्वं यस्य तस्मिन्, अतएव मन्दमन्दसञ्चारिणि, प्राभातिके प्रातःकालीये मातरिश्वनि समीरणे प्रवाति प्रवहति सति।

(ज) कमलेति। अत्र षष्ठ्यन्तानि मधुलिहां विशेषणानि। कमलवनस्य पद्मवनस्य प्रबोधे जागरणे विकसने मङ्गलपाठकानां स्तुतिपाठकरूपाणां कियतां मधुलिहां राज्ञां प्रबोध इव तदीयवन्दिनामिति भावः। इभगण्डेषु मदजलयुक्तकरिकपोलेषु डिण्डिमानां तदाख्यवाद्यविशेषरूपाणां कियतां मधुलिहां विषयविशेष-घोषणार्थं वाद्यमानानां डिण्डिमानामिव भ्रमराणामपि गुञ्जनेन कुञ्जराणां जागरणादिघोषणादिति भावः। तथा कुमुदोदरेषु कैरवाभ्यन्तरेषु घटमानैः सूर्योदयारम्भात् सङ्कुचद्भिः दलपुटैः निरुद्धा आवद्धा पतत्रसंहतिः पतत्रसमूहो येषां तादृशानाञ्च कियतां मधुलिहां भ्रमराणां हुङ्कारेषु अव्यक्तरवेषु उच्चरत्सु उत्तिष्ठत्सु सत्सु। अत्र भ्रमरेषु स्तुतिपाठकत्वारोपः शाब्दः, कमलवने राजत्वारोपस्तु आर्थ इत्येकदेशविवर्तिरूपकम्, इभगण्डेष्वत्र तु निरङ्गं केवलरूपकमित्यनयोर्मिथो निरपेक्षतया संसृष्टिः।

(झ) प्रभातेति। ऊषरशय्यया क्षारमृत्तिकायां शयनेन धूसरा धूसरवर्णा क्रोड़रोमराजयो येषां तादृ-शेषु वनमृगेषु, प्रभातशिशिरमारुतेन प्रातःकालीयशीतलवायुना आहतं ताड़ितं स्पृष्टमित्यर्थः, उत्तप्तेन वह्निना

---

করিয়া, বন্য মহিষগণের ফেনবিন্দু লইয়া, কম্পিত পল্লব ও লতাসমূহকে চাঞ্চল্যরূপ নৃত্য শিক্ষা দিয়া, প্রস্ফুটিত পদ্মসমূহের মধুবিন্দু বর্ষণ করিয়া, পুষ্পের সৌরভে ভ্রমরদিগকে সন্তুষ্ট করিয়া, মন্দমন্দসঞ্চারী প্রভাতকালের শীতল বায়ু বহিতে লাগিল; (জ) রাজগণের জাগরণের সময়ে বৈতালিকগণ যেমন মঙ্গলগান করে, তেমন কতকগুলি ভ্রমর সেই পদ্মবনবিকাসের সময়ে অব্যক্ত রব করিতে লাগিল; কতকগুলি ভ্রমর মদস্রাবী হস্তিসমূহের গণ্ডের উপরে বসিয়া 'গুন' 'গুন' ধ্বনি করিতে লাগিল; আর কতকগুলি ভ্রমর রাত্রিতে মধুলোভে প্রস্ফুটিত কৈরব-সমূহের অভ্যন্তরে (সাপলার ভিতরে) অবস্থান করিতেছিল, কিন্তু প্রভাতে সেই কৈরবসমূহের দল সকল সঙ্কুচিত হওয়ায় পক্ষ আবদ্ধ হইলে তাহারা সেই ভাবেই অব্যক্ত ধ্বনি করিতে লাগিল; (ঝ) ক্ষারমৃত্তিকায় শয়ন করায় বন্য হরিণগণের বক্ষঃস্থলের লোমসমূহ ধূসরবর্ণ হইয়াছিল,

---

(१) कमलप्रबोध...। (२) मधुलिहां पटलेषु। (३) विघटमान, घनघटमान...।
(४) निबद्ध...। (५) झङ्कारेषु, टङ्कारेषु। (६) वायाहतं। (७) पक्ष्मजालमिव।

तारं (१) चक्षुरुन्मीलयत्सु शनैः शनैरूषरशय्या-धूसर-क्रोड़-रोमराजिषु वनमृगीषु, (ञ) इतस्ततः सञ्चरत्सु वनचरेषु, विजृम्भमाणे श्रोत्रहारिणि पम्पासरःकल-हंसकोलाहले, समुल्लसति नर्त्तितशिखण्डिमण्डले (२) मनोहरे वनगजकर्णताल-शब्दे, (ञ) क्रमेण च गगनतल-(३) मवतरतो दिवसकरवारणस्यावचूल-(४) चामरकलाप इवोपलक्ष्यमाणे मञ्जिष्ठारागलोहिते किरणजाले, (ट) शनैः

सन्तप्तेन अतुरसेन लाक्षाद्रवेण श्लिष्टा परस्परसंयोजकभावेनाश्लिष्टा पक्ष्ममाला लोमपङ्क्तिर्यस्य तदिव, निद्राशेषवशेन सहसोन्मीलयितुमशक्यत्वादुत्तप्तलाक्षाद्रवेण परस्परग्रथितलोमपङ्क्तिकमिवानुभूयमानमिति भावः, सशेषया किञ्चिदवशिष्टया निद्रया जिह्मिता कुटिलीकृता तारा कनीनिका यस्य तत् तादृशं चक्षुः, शनैः शनैः उन्मीलयत्सु प्रसारयत्सु सत्सु। अत्र क्रियोत्प्रेक्षालङ्कारः।

(ञ) इत इति। वनचरेषु अरण्यचारिषु प्राणिषु। श्रोत्रहारिणि मधुरतया कर्णाकर्षिणि पम्पासरसः कलहंसानां कोलाहले, विजृम्भमाणे वर्द्धमाने सति। नर्त्तितं नाटितं शिखण्डिमण्डलं मयूरसमूहो येन तस्मिन्, मनोहरे श्रुतिमधुरे, वनगजानां वन्यहस्तिनां कर्णयोः श्रोत्रयोः तालवत् करतलध्वनिवत् शब्दे निनादे समुल्लसति तेषां जागरणानन्तरमुत्तिष्ठति सति। अत्र लुप्तोपमालङ्कारः। "तालः करतलध्वनि"-रित्यनेकार्थध्वनिमञ्जरी।

(ट) क्रमेणेति। गगनतलमवतरत आकाशमारोहतः, दिवसकरः सूर्य्यो वारणो हस्तीव तस्य, मञ्जिष्ठा नामौषधिविशेषः तस्या रागवत् रक्तिमवत् लोहिते रक्तवर्णे, किरणजाले रश्मिसमूहे, अवनता चूड़ा अग्रभागो यस्य सः अवचूलो यश्चामरकलापश्चामरसमूहस्तस्मिन्निव उपलक्ष्यमाणे दृश्यमाने सति। उच्चदेशमधिरोहतो गजस्य कर्णसमीपलम्बिन्यधोमुखे चामरकलाप इव आकाशमधिरोहतः सूर्य्यस्याधोमुखे किरणजाले दृश्यमाने सतीति सरलार्थः। अत्र चामरकलाप इवेत्युपमानुसाराद्दिवसकरवारणस्येत्यत्राप्युपमितसमासस्यैवाश्रयणीयतया लुप्तोपमा, मञ्जिष्ठेत्यत्रापि लुप्तोपमा, अन्या चोपमा इत्येतेषामङ्गाङ्गिभावेन सङ्करः।

প্রভাতকালের শীতল বায়ু তাহাদের নয়ন স্পর্শ করিতেছিল, তখনও নিদ্রা সম্পূর্ণ না হওয়ায় নয়নের তারা বক্র হইয়াছিল এবং নয়নের লোমগুলি যেন উত্তপ্ত লাক্ষারসে জড়িত হইয়া গিয়াছিল; (ঞ) অরণ্যচারী প্রাণিগণ ইতস্ততঃ বিচরণ করিতে লাগিল; পম্পাসরোবরস্থ কলহংসগণের শ্রুতিমধুর কোলাহল বৃদ্ধি পাইতে লাগিল; দুই করতলের শব্দের ন্যায় বন্যহস্তি-গণের কর্ণের মনোহর শব্দ ময়ূরগণকে নৃত্য করাইয়া উত্থিত হইতে লাগিল; (ট) ক্রমে সূর্য্যদেব আকাশের দিকে উঠিতে লাগিলেন, তখন, কোন হস্তী উপস্থিত হইতে লাগিলে তাহার কর্ণের নিকটে বদ্ধ, অধোমুখ চামর যেরূপ দেখা যায়, সূর্য্যের মঞ্জিষ্ঠার ন্যায় রক্তবর্ণ

(१) जिह्मतारं, जिह्मितधारकं। (२) नर्त्तितशिखण्डिनि। (३) गगनतलमार्गं, गगनमार्गं।
(४) अवधूत…।

शनैरुदिते भगवति सवितरि, (ठ) पम्पासरःपर्य्यन्त-तरु-शिखर-सञ्चारिणि (१) अध्यासित-गिरि-शिखरे दिवसकरजन्मनि ह्रततारे पुनरिव कपीश्वरे वनमभि-पतति बालातपे, (ड) स्पष्टे जाते प्रत्यूषसि, नचिरादिव दिवसाष्टमभाग-भाजि (२) स्पष्टभासि भास्वति भूते, (ढ) प्रयातेषु (३) यथाभिमतानि दिगन्त-राणि शुककुलेषु, कुलाय-निलीन-निभृत-शुक-शावक-सनाथेऽपि निःशब्दतया शून्य इव तस्मिन् वनस्पतौ, (ण) स्वनीड़ावस्थित एव ताते, मयि च शैशवादसञ्जात-

(ठ) शनैरिति। भगवति माहात्म्यवति सवितरि सूर्य्ये।

(ड) पम्पेति। पम्पासरसः पर्य्यन्ततरूणां प्रान्तवर्त्तिवृक्षाणां शिखरेषु उपरिभागेषु सञ्चरतीति तस्मिन्, अध्यासितं प्रागाश्रितं गिरेरुदयाचलस्य किष्किन्ध्यापर्वतस्य च शिखरं शृङ्गं येन तस्मिन्, दिवसकरात् सूर्य्यात् जन्म यस्य तस्मिन्, ह्रता स्वतेजसा लोपं नीता अपहृता च तारा नक्षत्रं तारानाम्नी वानरी च येन तस्मिन्, बालातपे नूतनसूर्य्यालोके कपीश्वरे सुग्रीव इव पुनः वनं अभिपतति व्याप्नुवति अभिगच्छति च सति। अत्र पूर्णोपमालङ्कारः। सुग्रीवस्य सूर्य्याज्जन्मन उपाख्यानं रामायणेऽनुसन्धेयम्।

(ढ) स्पष्ट इति। प्रत्यूषसि प्रभाते स्पष्टे जाते व्यक्ते प्रादुर्भूते सति। भास्वति सूर्य्ये, नचिरादिव अविलम्बेनेव दिवसस्य अष्टमभागं प्राथमिकयामार्द्धं भजत इति तस्मिन्, निशावसानसमयादारभ्य पादोन-दण्डचतुष्टयमतिक्रान्त इत्यर्थः, अतएव स्पष्टाः सर्वत्र व्यक्ता भासो दीप्तयो यस्य तादृशे, भूते जाते सति। अत्र गुणोत्प्रेक्षालङ्कारः, अविलम्बस्य सत्वरतया गुणपदार्थत्वात्।

(ण) प्रयातेष्विति। शुककुलेषु कीरगणेषु यथाभिमतानि दिगन्तराणि प्रयातेषु आहारार्थं गतेषु सत्सु। कुलायेषु नीड़ेषु निलीना लुक्कायिताः निभृता निःशब्दाः ये शुकशावकास्तैः सनाथेऽपि सहितेऽपि तस्मिन् वनस्पतौ शाल्मलीवृक्षे शून्य इव सर्वविधप्राणिरहित इव स्थिते सति। अत्र क्रियोत्प्रेक्षालङ्कारः।

(त) स्वनीड़ेति। ताते मम जनके स्वनीड़ावस्थित एव निजकुलाये विद्यमान एव। शैशवाद्बेतोः

---

কিরণসমূহ সেইরূপ দেখা যাইতে লাগিল; (ঠ) ক্রমে ভগবান্ সূর্য্যদেব ধীরে ধীরে উদিত হইলেন; (ড) সূর্য্যপুত্র বানররাজ সুগ্রীব তারাকে গ্রহণ করিয়া কিষ্কিন্ধ্যাপর্ব্বতের শৃঙ্গে অবস্থানপূর্ব্বক, পম্পাসরোবরের প্রান্তবর্ত্তী বৃক্ষসমূহের উপরে বিচরণ করিয়া, যেরূপ নিকটবর্ত্তী বনমধ্যে ভ্রমণ করিয়াছিলেন, সেইরূপ সূর্য্যের নবীনালোক প্রথমে আকাশের নক্ষত্রসমূহকে বিলুপ্ত করিয়া, উদয়াচলের শৃঙ্গে প্রকাশিত হইয়া, পম্পাসরোবরের প্রান্তবর্ত্তী বৃক্ষসমূহের উপরে পতিত হইয়া, ক্রমে সমস্ত বন ব্যাপ্ত করিল; (ঢ) এই ভাবে প্রভাতকাল স্পষ্টরূপে প্রাদুর্ভূত হইল; সূর্য্য যেন অবিলম্বে দিবসের প্রথম যামার্দ্ধ অতিক্রম করিয়া সর্ব্বত্র স্পষ্টরূপে আলোক বিস্তার করিতে লাগিলেন; (ণ) শুকপক্ষিগণ আহারের নিমিত্ত অভিমত দিগ্‌দিগন্তরে চলিয়া

---

(१) सञ्चारिणां। (२) अष्टभागभाजि। (३) प्रयातेषु च।

बले समुद्भिद्यमानपक्षपुटे तात-(१) समीपवर्त्तिनि कोटरगते, (त) सहसैव तस्मिन् महावने संत्रासितसकलवनचरः सरभससमुत्पतत्-(२) पतत्रिपक्षपुटसन्ततः भीत-करिपोत-चीत्कारपीवरः प्रचलित-मत्तालिकुल-क्वणितमांसलः परिभ्रमदुद्-घोण-वन-वराह-रव-घर्घरः (३) गिरिगुहा-सुप्त-प्रबुद्ध-सिंहनादोपबृंहितः (४) (थ) कम्पयन्निव तरून् भगीरथावतार्य्यमाण-(५) गङ्गाप्रवाह-कलकल-बहलो भीत-वनदेवताकर्णितो मृगयाकोलाहलध्वनिरुदचरत्। (द)

असञ्जातमनुत्पन्नं बलं उड्डयनादिसामर्थ्यं यस्य तस्मिन्, तथा समुद्भिद्यमानं क्रमशः प्रकाशमानं उत्पद्यमानं पक्षपुटं पतत्रयुगलं यस्य तस्मिन् तादृशे मयि च, तातसमीपवर्त्तिनि सति कोटरगते निजनीड़ाधारवृक्ष-विवरस्थिते सति।

(थ) सहसैवेति। तस्मिन् महावने सहसैव मृगयाकोलाहलध्वनिरुदचरदिति वक्ष्यमाणेनान्वयः। अत्र प्रथमान्तानि तादृशध्वनेर्विशेषणानि। संत्रासिता भयं प्रापिताः सकला बनचरा वन्याः प्राणिनो येन सः। सरभसं भयेन सवेगं समुत्पततां उड्डयमानानां पतत्रिणां पक्षिणां पक्षपुटैः पतत्रयुगलध्वनिभिः सन्ततो विस्तारितः। भीतानां वस्तानां करिपोतानां हस्तिशावकानां चीत्कारैर्हृदार्त्तिव्यञ्जकशब्दैः पीवरः स्थूलो बहुलीकृत इत्यर्थः। प्रचलितस्य भयेन स्वस्वस्थानात् प्रस्थितस्य मत्तस्य मधुपानेन मत्तस्य अलिकुलस्य भ्रमरगणस्य क्वणितेन अव्यक्तरवेण मांसलः पुष्टः। परिभ्रमतां भयेन घूर्णमानानां उद्घोणानां उच्चनासिका-युक्तानां वनवराहाणां वन्यशूकराणां रवैरार्त्तध्वनिभिः घर्घरः "घर् घर्" इत्येवं ध्वनिविशिष्टीकृतः। गिरि-गुहासु सुप्ता आदौ निद्रिताः अनन्तरं प्रबुद्धा मृगयाकोलाहलेन जागरिता ये सिंहास्तेषां नादेन गर्जनेन उपबृंहितो वर्द्धितः।

(द) कम्पयन्निति। भगीरथेन तदाख्येन केनचित् सूर्य्यवंशीयेन राज्ञा अवतार्य्यमाणो हिमालया-

গেল; শুকশাবকগণ নীরবে নিজ নিজ বাসাতে অবস্থান করিতে লাগিলেও কোনরূপ শব্দ ছিল না বলিয়া সেই শাল্মলীবৃক্ষ যেন শূন্য বলিয়া বোধ হইতে লাগিল; (ত) আমার পিতা নিজ বাসাতেই অবস্থান করিতেছিলেন, আমিও পিতার নিকটে কোটরের ভিতরেই ছিলাম, অত্যন্ত শৈশবকাল বলিয়া আমার উড়িবার ক্ষমতা জন্মিয়াছিল না, কেবল পাখা উঠিতেছিল; (থ) তৎক্ষণাৎ সেই মহাবনমধ্যে মৃগয়ার কোলাহলশব্দ উঠিল; তাহাতে বনচর সকল প্রাণী ভীত হইল; ভয়বশতঃ বেগে উড্ডীন পক্ষিগণের পক্ষপুটের শব্দে, ভীত হস্তিশাবকগণের চীৎকারে, ভয়ে প্রচলিত মত্ত ভ্রমরগণের অব্যক্ত রবে, ইতস্ততো বিচরণকারী উচ্চনাসিকাসমন্বিত বন্যবরাহগণের 'ঘর্ ঘর্' শব্দে এবং গিরিগহ্বরে সুপ্তোত্থিত সিংহগণের ভীষণ গর্জ্জনে সেই কোলাহলধ্বনি আরও বর্দ্ধিত হইল।

(দ) ভগীরথকর্ত্তৃক হিমালয় হইতে ভূতলে আনয়নের সময়ে গঙ্গাস্রোতের কলকলের

(१) पितुः। (२) सरभससमुत्पतत्...। (३)...घर्घरकठोरः।
(४) नादबृंहितः। (५) ...आवार्य्यमाण...।

आकर्ण्य च (१) तमहमश्रुतपूर्वमुपजातवेपथुरर्भकतया जर्ज्जरित-कर्ण-विवरो भयविह्वलः समीपवर्त्तिनः पितुः प्रतीकारबुद्ध्या जराशिथिलपक्षपुटान्तरमविशम्। (ध)

अनन्तरञ्च "सरभसमितो गजयूथपति-लुलित-कमलिनी-परिमलः, इतः क्रोड़कुल-दश्यमान-भद्र-मुस्ता-रसामोदः, इतः करिकलभ-भज्यमान-शल्लकी-कषाय-गन्धः, (न) इतो निपतित शुष्कपत्र-मर्म्मरध्वनिः, इतो वन-महिष-विषाण-कोटि-

---

कूतलमानीयमानो यो गङ्गाप्रवाहस्तस्य कलकल इव बहलः परिपुष्टः, तथा भीताभिर्वनदेवताभिराकर्णितः श्रुतः। मृगया पशुहिंसा तदर्थः कोलाहलध्वनिरस्पष्टशब्दः उदचरदुदतिष्ठत्। अत्र कम्पयन्निवेति क्रियोत्प्रेक्षा, गङ्गाप्रवाहकलकलबहल इति लुप्तोपमा चानयोर्मिथो निरपेक्षतया संसृष्टिः।

(ध) आकर्ण्येति। अहं वैशम्पायनः। तं मृगयाकोलाहलध्वनिं। उपजातवेपथुः भयेनोत्पन्नकम्पः, अर्भकतया शिशुतया जर्ज्जरितकर्णविवरो विदीर्णकर्णरन्ध्रः। प्रतीकारबुद्ध्या भयनिवृत्त्युपायज्ञानेन। जरया वार्द्धक्येन शिथिलं श्लथं यत् पक्षपुटं पतत्रयुगलं तस्य अन्तरं मध्यम्।

(न) अनन्तरञ्चेति। पक्षपुटान्तरप्रवेशानन्तरञ्च कोलाहलमशृणवमिति वक्ष्यमाणक्रिययान्वयः। इदन्तया कोलाहलं विशिषयन्नाह सरभसमित्यादि। इतः अस्मिन् स्थाने, एवं सर्वत्र। सरभसं सवेगं गजयूथपतिभिः हस्तिगणश्रेष्ठैः लुलितानां मर्द्दितानां कमलिनीनां पद्मिनीनां परिमलः विमर्द्दगन्धः प्रसरतीति शेषः। अतएवात्र गजाः सन्तीति सम्भाव्यत इति भावः। क्रोड़कुलेन वराहसमूहेन दश्यमानानां दष्ट्रा भुज्यमानानां भद्रमुस्तानां मुस्ताविशेषाणां रसस्य द्रवस्य आमोदः सौरभं। सुतरामत्र वराहाणामस्तित्व-सम्भावनेति भावः। करिकलभैः हस्तिशावकैः भज्यमानानां आमर्द्यमानानां शल्लकीनां हस्तिखाद्यवृक्षविशेषाणां कषायगन्धः निर्याससौरभं। अतएवात्र करिशावकानां स्थितिसम्भव इति भावः।

(प) इत इति। निपतितानां शुष्कपत्राणां मर्म्मरध्वनिः मर्म्मर इत्येवं शब्दः। सुतरामत्र कश्चित्

---

ন্যায় বিশাল সেই কোলাহলধ্বনি বৃক্ষসমূহকে যেন কম্পিত করিতে লাগিল; তখন বনদেবতাগণ ভীত হইয়া সেই কোলাহল শুনিতে লাগিলেন।

(ধ) আমি অশ্রুতপূর্ব্ব সেই কোলাহল শুনিয়া ভয়ে ব্যাকুল হইয়া পড়িলাম, আমার শরীর কাঁপিতে লাগিল এবং কর্ণবিবর যেন বিদীর্ণ হইয়া গেল। তখন প্রতীকারের আশায় নিকটবর্ত্তী পিতার বার্দ্ধক্যনিবন্ধন শিথিল পক্ষযুগলের অভ্যন্তরে প্রবেশ করিলাম।

(ন) তাহার পর "এই স্থানে গজেন্দ্রগণ পদ্মলতাসমূহকে মর্দ্দিত করিয়াছে, তাহার সৌরভ নির্গত হইতেছে; এইখানে বরাহগণ মুস্তা (মুথা) তুলিয়া খাইয়াছে, তাহার গন্ধ বাহির হইতেছে; এই স্থানে হস্তিশাবকগণ শল্লকীবৃক্ষ ভাঙ্গিয়াছে, তাহার নির্য্যাসের সৌরভ বহির্গত হইতেছে; (প) এই স্থানে বৃক্ষ হইতে পতিত শুষ্কপত্রের মর্ম্মরশব্দ হইতেছে; এইখানে বন্য

---

(१) आकर्ण्य तं।

कुलिश-भिद्यमान-वल्मीकधूलिः, इतो मृग-कादम्बकम्, इतो वनगजकुलम्, इतो वन-वराहयूथम्, (१) इतो वनमहिष-वृन्दम्, इतः शिखण्डि मण्डल-विरुतम्, इतः कपिञ्जल-कुल-कल-कूजितम्, इतः कुरर-कुल-क्वणितम्, इतो मृगपति-नख-भिद्यमानकुम्भ-कुञ्जर-रसितम्, (फ) इयमार्द्र-पङ्क-मलिना वराहपद्धतिः,(२) इयमभिनव-शष्पकवल-रस-श्यामला हरिण-रोमन्थ-फेन-संहतिः, इयमुन्मद-गन्धगज-गण्डकण्डूयनपरिमल-निलीन (३) मुखर-मधुकर-विरुतिः, एषा निपतित रुधिरविन्दु-सिक्त-

---

पशुर्विचरतीत्यनुमीयत इति भावः। वनमहिषाणां विषाणकोटयः शृङ्गाग्राणि कुलिशानि वज्राणीव अथवा विषाणकोटय एव कुलिशानि तैर्भिद्यमानानां विदार्य्यमाणानां वल्मीकानां उयीकाकृतमृत्तिकास्तूपानां धूलिः प्रसरतीति शेषः। अतएवात्र महिषाः सन्तीति भावः। अत्रोपमारूपकयोः सन्देहसङ्करः। "वल्मीकः (पुं क्ली) उयीकाकृतमृत्तिकास्तूपः।" इति शब्दकल्पद्रुमः। मृगकादम्बकं हरिणसमूहः। वनगजकुलं वन्यहस्तिगणः। शिखण्डिमण्डलस्य मयूरसमूहस्य विरुतं रवः। कपिञ्जलकुलस्य चातकपक्षिगणस्य कलकूजितं अव्यक्तमधुरध्वनिः। "कपिञ्जलः (पुं) चातकपक्षी" इति शब्दकल्पद्रुमः। कुररकुलस्य उत्क्रोशपक्षिगणस्य क्वणितं रवः। मृगपतीनां सिंहानां नखैर्भिद्यमाना विदार्य्यमाणाः कुम्भा मस्तकस्थकुम्भाकारमांसपिण्डानि येषां तादृशानां कुञ्जराणां हस्तिनां रसितं चीत्कारः।

(फ) इयमिति। इयं अनतिदूरे दृश्यमाना, एवं सर्वत्र। आर्द्रेण स्तिमितेन पङ्केन कर्द्दमेन वराहाणामिव देहेभ्यः पतितकर्द्दमेनेत्यर्थः, मलिना कृष्णवर्णा वराहपद्धतिः शूकराणां पन्थाः। अभिनवानामचिरोत्पन्नानां शष्पाणां तृणानां ये कवला ग्रासास्तेषां चर्व्यमाणबालतृणानामित्यर्थः, रसैर्निर्य्यासैः श्यामला श्यामवर्णा, हरिणानां रोमन्थस्य चर्वितचर्वणस्य फेनसंहतिः। उन्मदानां मदमत्तानां गन्धगजानां गन्धहस्तिनां हस्तिविशेषाणां गण्डकण्डूयनेन कपोलघर्षणेन ये परिमलाः सौरभाणि तेषु तत्परिमलयुक्तस्थानेष्वित्यर्थः। निलीनानामवस्थितानां मुखराणां शब्दायमानानां मधुकराणां भ्रमराणां विरुतिः शब्दितं। निपतितैः अल्पाक-

---

মহিষগণ বজ্রতুল্য শৃঙ্গদ্বারা বল্মীকমৃত্তিকা বিদারণ করায় তাহার ধূলি উড়িতেছে; এই দিকে হরিণগণ বিচরণ করিতেছে, এইখানে বন্যহস্তিগণ রহিয়াছে, এই স্থানে বন্য বরাহগণ ভ্রমণ করিতেছে, এই দিকে বনের মহিষসমূহ বিচরণ করিতেছে, এইখানে ময়ূরগণ রব করিতেছে, এই দিকে চাতকপক্ষিগণ অব্যক্ত মধুরধ্বনি করিতেছে, এই দিকে বাজকুরুল ডাকিতেছে, এই স্থানে সিংহসমূহ নখদ্বারা কুম্ভ বিদারণ করিলে হস্তিসমূহ চীৎকার করিতেছে; (ফ) এই, তরল কর্দ্দমসংযুক্ত বরাহদিগের পথ দেখা যাইতেছে; হরিণগণের চর্ব্বিত-চর্ব্বণের বেলায় মুখ হইতে নিপতিত এই সমস্ত ফেনসমূহ ভক্ষ্যমাণ নূতন তৃণের রসে শ্যামবর্ণ হইয়াছে; মত্ত হস্তিগণের কপোল-কণ্ডূয়নের সময় যে স্থানে মদসৌরভ লাগিয়াছিল, ভ্রমরগণ বৃক্ষের সেই স্থানে বসিয়া রব করিতেছে; এই রুরুহরিণের বিচরণপথ দেখা যাইতেছে, এই পথ রুধিরসিক্ত

---

(१) इतो वराहयूथं। (२) वराहकुलपद्धतिः। (३)...आलीन...।

शुष्कपत्र-पाटला रुरुपदवी, (फ) एतद्द्विरद-चरण-मृदित-विटप-पल्लव-पटलम्, एतत् खड्गिकुल-क्रीड़ितम्, (१) एष नख-कोटि-विलिखित-विकट-(२) पत्रलेखो रुधिर-पाटल: करिमौक्तिक-दन्तुरो (३) मृगपति मार्ग:, (ब) एषा प्रत्यग्र-प्रसूत-वनमृगी-गर्भ-रुधिर-लोहिनी भूमि:, इयमटवी वेणिकानुकारिणी (४) पञ्चचरस्य (५) यूथपतेर्मद-जल-मलिना, (भ) सञ्चार-वीथी-चमरीपङ्क्तिरियमनुगम्यताम्, उच्छुष्क-मृग-करीष-पांशुला त्वरिततरमध्यास्यतामियं वनस्थली, तरुशिखरमारुह्यताम्,

सस्त्रप्रहारेण गावात् चरितै: रुधिरविन्दुभि: सिक्तानि यानि शुष्कपत्राणि तै: पाटला श्वेतरक्तवर्णा रुरुपदवी मृगविशेषपथ:।

(ब) एतदिति। द्विरदानां हस्तिनां चरणै: पादै: मृदितानां दलितानां विटपानां शाखानां पल्लवानाञ्च पटलं समूह:। सुतरामितोऽचिरादेव करिणो गता इति भाव:। खड्गिकुलस्य गण्डकसमूहस्य क्रीड़ितं विहृतं मृत्तिकायां खेलाचिह्नं दृश्यत इत्यर्थ:। अतएव गण्डकानामपीयं विहारभूमिरिति भाव:। नखकोटिभि: नखराग्रै: नखाग्रस्रुतरुधिरै: विलिखिता: चित्रिता: विकटा: भयानका: पत्रलेखा: पत्राकार-चिह्नानि यस्मिन् स:, रुधिरैर्निहतजन्तुरक्तै: पाटल: श्वेतरक्त:, तथा करिमौक्तिकैर्मारितगजमुक्ताभि: दन्तुरो विषम उच्चावच इति यावत् मृगपते: सिंहस्य मार्गो विचरणपथ:। सुतरामनेन पथा सिंहो गत इति भाव:।

(भ) एषेति। प्रत्यग्रं नूतनं अचिरं प्रसूता प्रसूतवती या वनमृगी तस्या गर्भरुधिरेण उदर-रक्तेन लोहिनी रक्तवर्णा। प्रसूतेति आदिकर्म्मविवक्षया कर्त्तरि क्त:। वेणिकानुकारिणी केशवेणीसदृशी कुटिलेति तात्पर्य्यं, इयमटवी इदं वनं, पञ्चेण स्वयूथेन चरतीति तस्य, यूथपते: करीन्द्रस्य मदजलेन मलिना श्यामला। अतएवात्र करिणो विचरन्तीति भाव:।

(म) सञ्चारेति। इयमदूरे दृश्यमाना, सञ्चारवीथ्यां विचरणमार्गे चमरीपङ्क्ति: चमरमृगीश्रेणि:, अनुगम्यतां वधायानुस्रियताम्। उच्छुष्कैर्नितान्तशुष्कै: मृगकरीषै: हरिणगूथै: पांशुला सरजस्का इयं

শুষ্কপত্রে ব্যাপ্ত থাকায় পাটলবর্ণ হইয়াছে; (ব) হস্তিগণের চরণদলিত এই সকল শাখা ও পল্লব দেখা যাইতেছে; এই সকল গণ্ডারগণের খেলার চিহ্ন দেখা যাইতেছে; এই, সিংহের গমনাগমনের পথ, কারণ, নখের অগ্র হইতে নিঃসৃত রক্তধারা ভয়ঙ্কর পত্রাকৃতি চিহ্ন সকল চিত্রিত রহিয়াছে, আর নিহত জন্তুর রক্তে পথটি পাটলবর্ণ ও গজমুক্তাতে সম-বিষম হইয়াছে (উচু-নীচু হইয়াছে); (ভ) এই স্থানে বন্য হরিণী নূতন প্রসব করিয়াছে, সুতরাং তাহার উদরের রক্তে স্থানটি রক্তবর্ণ হইয়াছে; কেশনির্ম্মিত বেণীর ন্যায় বক্র এই বনটি স্বদলের সহিত বিচরণকারী বৃহৎ হস্তীর মদজলে মলিন হইয়াছে; (ম) বিচরণের পথে এই চমরীহরিণীগণকে দেখা যাইতেছে, সুতরাং ইহাদের অনুসরণ কর; হরিণগণের অত্যন্ত শুষ্ক বিষ্ঠায় এই বনভূমি

(१) शिखण्डिकुलक्रीड़ितं। (२)...विकटविलिखितपत्रलेख:। (३) मौक्तिकदन्तुर:।
(४) वेणिकानुसारिणी। (५) एकचरस्य।

आलोक्यतां दिगियम्, आकर्ण्यतामयं शब्दः, गृह्यतां धनुः, अवहितैः स्थीयताम्, विमुच्यन्तां श्वानः" इत्यन्योन्यमभिदधतो मृगयासक्तस्य (१) महतो जनसमूहस्य तरुगहनान्तरित-विग्रहस्य क्षोभितकाननं कोलाहलमशृणवम्। (म)

अथ नातिचिरादेवानुलेपनार्द्र-मृदङ्ग-ध्वनि-(२)धीरेण गिरि-विवर-विजृम्भित-प्रतिनाद-गभीरेण (३) शबर-शर-ताड़ितानां (४) केशरिणां निनादेन, (य) संत्रस्त-यूथ-मुक्तानामेकाकिनाञ्च सञ्चरतामनवरत-करास्फोटमिश्रेण जलधर-

---

वनस्थली त्वरिततरं अध्यास्यतां मृगाणामन्वेषणाय आश्रीयतां प्रविश्यतां। तरोः शिखरमुपरिभागः आरुह्यतां पक्षिवधायेति भावः। इयं दिक् आलोक्यतां, पशवः सन्ति न वेति ज्ञानायेत्यभिप्रायः। अयं शब्द आकर्ण्यतां, सुतरां शब्दवद्देशे गन्तव्यमित्याशयः। धनुर्गृह्यतां सहसैव पशुहननार्थमिति भावः। अवहितैः सावधानैः सद्भिः स्थीयतां, अन्यथा यदि समीपादेवाचतशरीराः पशवः पलायेरन्निति भावः। श्वानः कुक्कुराः विमुच्यन्तां प्रस्थाप्यन्तां हन्तव्यपशूनामन्वेषणायेत्यभिप्रायः। पोषितकुक्कुरविशेषा हि पशूनन्विष्य सङ्केतविशेषेण प्रभून् ज्ञापयन्तीति प्रवादः। इत्यन्योन्यमतिदधतः इत्थं परस्परं ब्रुवतः, मृगयासक्तस्य पशुहिंसाप्रवृत्तस्य, महतो विशालस्य विस्तृतस्थानव्यापिन इत्यर्थः। तरुगहनेन पादपवनेन वृक्षश्रेण्या अन्तरितास्तिरोहिता विग्रहाः शरीराणि यस्य तस्य। क्षोभितमुद्वेलितं काननं वनं येन तम्।

(य) अथेति। नातिचिरादेव अनतिविलम्बादेव सर्वतः प्रचलितमिव तदरण्यमभवदिति परेणान्वयः। अत्र तृतीयान्तानि प्रचलितमिति क्रियायाः करणानि। अनुलेपनेन मुखयोर्द्रवद्रव्यविशेषलेपनेन आर्द्रः क्लिन्नो यो मृदङ्गो मुरजः तस्य ध्वनिवत् धीरेण गम्भीरेण। गिरिविवरेषु पर्वतगुहासु विजृम्भितेन प्रसृतेन प्रतिनादेन प्रतिध्वनिना गभीरो विशालस्तेन। अत्र प्रथमविशेषणे लुप्तोपमालङ्कारः।

(र) संत्रस्तेति। संत्रस्तेन किराताक्रमणाच्चकितेन यूथेन सजातीयगणेन मुक्तानां परित्यक्तानां, अतएव एकाकिनामसहायानां पृथक् पृथगभूतानां सतामित्यर्थः, सञ्चरतां विचरतां गजयूथपतीनां, अनवरतो-

---

धূলিময় হইয়াছে, অতএব অতি সত্বর প্রবেশ কর; এই বৃক্ষের উপরে আরোহণ কর, এই দিকে দৃষ্টিপাত কর, এই শব্দ শ্রবণ কর, শীঘ্র ধনুক গ্রহণ কর, সাবধানে অবস্থান কর, কুকুর ছাড়িয়া দাও", এইরূপে পরস্পর কথোপকথনকারী, মৃগয়ায় প্রবৃত্ত, বৃক্ষশ্রেণীর অন্তরালবর্ত্তী ও বিস্তৃত স্থানব্যাপী লোকসমূহের কোলাহল শুনিতে পাইলাম; সেই কোলাহলে বন উদ্বেলিত হইয়াছিল।

(য) তাহার পর অনতিবিলম্বেই সেই বন যেন সর্ব্বতোভাবে কম্পিত হইতে লাগিল; তাহার কারণ—সিংহসমূহ ব্যাধগণের শরপ্রহারে ব্যথিত হইয়া গর্জ্জন করিতে লাগিল, সেই গর্জ্জনধ্বনি, দুই দিকে তরলদ্রব্য লিপ্ত থাকায় আর্দ্র মৃদঙ্গধ্বনির ন্যায় গম্ভীর এবং পর্ব্বতগুহাব্যাপী প্রতিধ্বনিতে আরও বর্দ্ধিত হইয়াছিল। (র) ভয়চকিত নিজ দল হইতে পরিভ্রষ্ট হইয়া পৃথক্

---

(१)···प्रसक्तस्य। (२)...ध्वान···। (३) गम्भीरेण। (४) क्वचित् शबरपदं नास्ति।

रसितानुकारिणा गजयूथपतीनां कण्ठगर्जितेन, (र) सरभस-सारमेय-विलुप्य-मानावयवानामालोल-कातर-तरलतर-(१) तारकाणामेणकानाञ्च करुण-कूजि-तेन, (ल) निहत-यूथपतीनां वियोगिनीनामनुगत-कलभानाञ्च स्थित्वा स्थित्वा समाकर्ण्य कलकलमुत्कर्णपल्लवानामितस्ततः परिभ्रमन्तीनां प्रत्यग्र-पतिविनाश-शोकदीर्घेण करिणीनां चीत्कृतेन, (व) कतिपय-दिवस-प्रसूतानाञ्च खड्गि-धेनुकानां त्रास-परिभ्रष्ट-पोतकान्वेषिणीनामुन्मुक्तकण्ठ-(२)मारसन्तीनामाक्रन्दि-

ऽविरतः यः कराम्फोटः शुण्डाघातः शुण्डाघातध्वनिरिति तात्पर्य्यं तेन मिश्रं मिलितं तेन, जलधररसितानु-कारिणा मेघगर्जनसदृशेन, कण्ठगर्जितेन कण्ठनिर्गतबृंहितध्वनिना। अत्रार्थी समासगता लुप्तोपमालङ्कारः।

(ल) सरभसेति। सरभसैः सवेगैः सारमेयैः कुक्कुरैः विलुप्यमानाः दशनैश्छिद्यमानाः अवयवा अङ्गानि येषां तेषां, अतएव आलोलाः अश्रुप्लुताः, कातरा दीना दारुणवेदनाव्यञ्जकाः, तरलतरा भयेनातीवचञ्चलाः, तारकाः कनीनिका येषां तेषां, एणकानां हरिणविशेषाणां करुणकूजितेन शोक-व्यञ्जकशब्देन। एणकानामित्यनुकम्पायां कप्रत्ययः। अत्र वृत्त्यनुप्रासोऽलङ्कारः।

(व) निहतेति। निहतः किरातैर्व्यापादितः यूथपतिः सजातीयगणश्रेष्ठो हस्ती यासां, तासां अतएव वियोगिनीनां पतिविरहिणीनां, अनुगताः पश्चाल्लग्नाः कलभाः शावका यासां तासां, स्थित्वा स्थित्वा यत्र कुत्रचित् अवस्थाय अवस्थाय कलकलं किरातानां कोलाहलं समाकर्ण्य उत्कर्णपल्लवानां उन्नमितपल्लवा-कारकर्णानां इतस्ततः परिभ्रमन्तीनां करिणीनां, प्रत्यग्रेण नूतनेन पतिविनाशेन यः शोकस्तेन दीर्घं आयत-स्तेन चीत्कृतेन आर्त्तचीत्कारेण।

(श) कतीति। त्रासेन भयेन परिभ्रष्टान् यूथाद्विच्युतान् पोतकान् स्वस्वशावकान् अन्वेष्टुं शीलं यासां तासां, अतएव उन्मुक्तकण्ठं यथा स्यात्तथा आरसन्तीनां रुवतीनां खड्गिधेनुकानां पयस्विनीनां गण्डक-स्त्रीणां, आक्रन्दितेन आर्त्तनादेन।

---

পৃথক্ ভাবে বিচরণকারী গজেন্দ্রগণ মেঘের ন্যায় গম্ভীর গর্জ্জন করিতে লাগিল, সেই শব্দ তাহাদের অবিরত শুণ্ডাঘাতশব্দের সহিত মিলিত হইয়াছিল। (ল) বেগগামী কুক্কুরগণ দন্তদ্বারা শরীরের মাংসাচ্ছদন করিতে লাগিলে, 'এণ' হরিণগণ দারুণ বেদনাবশতঃ আর্ত্তনাদ করিতেছিল এবং তাহাদের নয়নের তারা অশ্রুপ্লাবিত, কাতর ও নিতান্ত চঞ্চল হইয়াছিল। ব্যাধগণ দলের প্রধান হস্তীকে বিনাশ করিলে বিরহিণী হস্তিনীগণ নানাস্থানে বিচরণ করত অভিনব পতিশোকে দীর্ঘ চীৎকার করিতে লাগিল এবং থাকিয়া থাকিয়া ব্যাধগণের কোলাহল শুনিয়া, পল্লবের ন্যায় বিস্তৃত কর্ণযুগল উত্তোলন করিতেছিল; তখন করিশাবকগণও তাহাদের পশ্চাৎ পশ্চাৎ চলিতেছিল। (শ) যাহারা অল্প দিনমাত্র প্রসব করিয়াছে, এইরূপ গণ্ডারস্ত্রীগণ, ভয়বশতঃ স্বদল হইতে নির্গত শাবকদিগকে অন্বেষণ করত উন্মুক্তকণ্ঠে আর্ত্তনাদ করিতে লাগিল।

---

(१) विलोल...तरलतारकाणां। (२)...कण्ठमतिकरुणं।

तेन, ( य ) तरुशिखरसमुत्पतितानामाकुलाकुलचारिणाञ्च पत्ररथानां कोलाहलेन, (१) ( र ) रूपानुसारप्रधावितानाञ्च (२) मृगयूणां (३) युगपदतिरभस-पाद-पाताभिहताया भुवः कम्पमिव जनयता चरणशब्देन, ( ल ) कर्णान्ताकृष्ट-ज्यानाञ्च मदकल-कुरर-कामिनी-कण्ठ-कूजितकलेन शरनिकरवर्षिणां धनुषां निनादेन, ( व ) पवनाहति-(४) क्वणित-धाराणामसीनाञ्च कठिन-महिष-स्कन्ध-पीठपातिनां (५) रणितेन, ( श ) शुनाञ्च सरभस-विमुक्त-घर्घर-ध्वनीनां वनान्तर-व्यापिना ध्वानेन सर्वतः प्रचलितमिव तदरण्य-(६)मभवत्। ( क )

---

(य) तरुशिखरेति। तरूणां शिखरेभ्यः उपरिभागेभ्यः समुत्पतितानां उड्डीनानां, आकुलाकुलं आकुलप्रकारं भयव्याप्तं यथा स्यात्तथा चरन्तीति तेषां पत्ररथाणां पक्षिणां।

( र ) रूपेति। रूपाणां मृगाणां "रूपं मृगेऽपि विज्ञेय"मिति हलायुधः, अनुसारेण अनुगमनेन गमनक्रमेण वा प्रधावितानां वेगगामिनां मृगयूणां किरातानां, युगपदेकदा अतिरभसेन महावेगेन ये पाद-पाताश्चरणन्यासास्तैः अभिहताया आहताया: भुवः पृथिव्याः। वस्तुत एव कम्पजननादिव शब्दो वाक्यालङ्कारे।

( ल ) कर्णेति। कर्णान्ते कर्णसमीपे आकृष्टा ज्या गुणा येषां तेषां, शरनिकरवर्षिणां धनुषां, मदकलानां मदमत्तानां कुररकामिनीनां उत्क्रोशपक्षिणीनां कण्ठकूजितवत् गलध्वनिवत् कलेन अव्यक्तमधुरेण निनादेन शब्देन। अत्र लुप्तोपमालङ्कारः। कुररकामिनीति कामिनीपदं ध्वनेरव्यक्तमधुरताद्योतनार्थम्।

( व ) पवनेति। पवनस्य आहत्या वायोराघातेन क्वणिताः शब्दिता धारा निशितांशा येषां तेषां रणितेन शब्देन।

( क ) शुनामिति। तथा सरभसं सवेगं विमुक्ताः परित्यक्ताः विहिता घर्घरध्वनयः 'घर् घर्' इत्येवं शब्दा यैस्तेषां शुनां कुक्कुराणाञ्च ध्वानेन शब्देन। प्रचलितमिव कम्पितमिव। अत्र क्रियोत्प्रेक्षालङ्कारः।

---

( য ) পক্ষিগণ বৃক্ষের উপরিভাগ হইতে উড্ডীন হইয়া সভয়ে বিচরণ করতঃ কোলাহল করিতেছিল। ( র ) ব্যাধগণ একদা মহাবেগে পদক্ষেপ করিয়া পশুদিগের পশ্চাৎ পশ্চাৎ ধাবিত হইয়াছিল, তাহাদের সেই পদাঘাতে ভূতল কম্পিত করিয়া শব্দ হইতেছিল। ( ল ) অপর ব্যাধগণ কর্ণপর্য্যন্ত গুণ আকর্ষণ করিয়া বাণক্ষেপ করিতেছিল, তাহাতে বাজকুরুলপক্ষিণীগণের কণ্ঠধ্বনির ন্যায় সেই বাণবর্ষী ধনুকের শব্দ হইতেছিল। ( ব ) বায়ুর আঘাতে তরবারির ধার 'কন কন' করিয়া উঠিতেছিল এবং সেই তরবারিগুলি মহিষগণের কঠিন স্কন্ধদেশে পতিত হইতেছিল, তাহাতেও শব্দ হইতে লাগিল, ( ক ) এবং কুকুরগণ বেগে 'ঘর্ ঘর্' শব্দ করিতেছিল, সেই শব্দে অপর বনও ব্যাপ্ত হইতেছিল।

---

(१) निनादेन। (२)...प्रस्थितानाञ्च। (३) मृगयूथानां। (४) पवनाहत।...।
(५)...पीठपाटितानां। (६) तदारण्यं।

अचिराच्च प्रशान्ते तस्मिन् मृगयाकलकले, निर्वृष्ट-मूक-जलधर-वृन्दानुकारिणि मथनावसानोपशान्तवारिणि सागर इव स्तिमिततामुपगते (१) कानने, (२) मन्दीभूतभयोऽह-(३) मुपजात-कुतूहल: पितुरुत्सङ्गादीषदिव निष्क्रम्य कोटरस्थ एव शिरोधरां प्रसार्य्य सन्त्रास-तरल-(४) तारक: शैशवात् किमिदमिति सञ्जातदिदृक्ष: (५) तामेव दिशं चक्षु: प्राहिणवम्। (ख)

अभिमुखमापतच्च (६) तस्माद्वनान्तरादर्जुन-भुजदण्ड-सहस्र-विप्रकीर्णमिव नर्म्मदा-प्रवाहम्, अनिलचलितमिव (७) तमाल-काननम्, एकीभूतमिव काल-

---

(ख) अचिरादिति। प्रशान्ते विरते। निर्वृष्टं नि:शेषेण कृतवर्षं अतएव मूकं नीरवं यत् जलधरवृन्दं मेघसमूह: तदनुकर्त्तुं शीलं यस्य तस्मिन् तादृशे कानने, मथनस्य देवासुरैर्मन्थनस्य अवसाने समाप्तौ उपशान्तं विरतं उद्वेलनहीनं वारि जलं यस्य तस्मिन् सागर इव स्तिमिततां निश्चलतां उपगते प्राप्ते सति। उत्सङ्गात् क्रोड़ात्। शिरोधरां ग्रीवां प्रसार्य्य कोटराद्बहिर्निःसार्य्य, सन्त्रासेन आशङ्कया तरले चञ्चले तारके कनीनिकाद्वयं यस्य स:। सञ्जाता उत्पन्ना दिदृक्षा द्रष्टुमिच्छा यस्य स:। तामेव दिशं प्रति। प्राहिणवं प्रेरयम्। अत्र निर्वृष्टेत्यादावार्थी समासगता लुप्तोपमा, अन्या चोपमा, अनयोर्मिथो निरपेक्षतया संसृष्टि:।

(ग) अभीति। तस्माद्वनान्तरादभिमुखमापतत् शवरसैन्यमद्राक्षमिति वक्ष्यमाणेनान्वय:। अत्र द्वितीयान्तपदानि शवरसैन्यविशेषणानि। वनान्तरात् अरण्यमध्यात्, आपतत् आगच्छत्। अर्जुनेति। अर्जुनेन कार्त्तवीर्य्येण भुजदण्डानां सहस्रेण सहस्रसंख्यकदण्डोपमबाहुभि: करणै: विप्रकीर्णं विक्षिप्तं नर्म्मदाया नद्या: प्रवाहं स्रोत इव। अविच्छिन्नश्रेणीकत्वादिति भाव:। अत्रोपमालङ्कार:।

पुरा किल हैहयपति: कार्त्तवीर्य्य: सहस्रबाहुभिर्नर्म्मदाप्रवाहं विक्षिप्य जलकेलिमकरोदिति रामायणवार्त्ता।

अनिलेति। अनिलेन वायुना चलितं प्रस्थितं उन्मूलितं सत् स्थानान्तरगमनशीलमित्यर्थ: तमालतरूणां काननं वनमिव निविड़कृष्णवर्णत्वाद्दीर्घाकृतित्वाच्चेति भाव:। अत्रोपमालङ्कार:।

---

(খ) অচিরকালমধ্যে সেই মৃগয়ার কোলাহল নিবৃত্তি পাইলে এবং সম্পূর্ণ বৃষ্টি করায় নিঃশব্দ মেঘসমূহের ন্যায় অবস্থিত সেই মহাবন, দেব ও দানবগণের মন্থন সমাপ্ত হইলে উদ্বেলনবিহীন সমুদ্রের ন্যায় স্থিরতা প্রাপ্ত হইলে, আমার ভয় কমিয়া গেল, বিষয়টি জানিবার জন্য কৌতুক জন্মিল এবং শিশুতানিবন্ধন 'ব্যাপারটা কি' তাহা দেখিবারও ইচ্ছা হইল, আবার আশঙ্কায় নয়নের তারাও কাঁপিতেছিল; তখন আমি পিতার ক্রোড় হইতে অল্পমাত্র নির্গত হইয়া, কোটরে থাকিয়াই গলা বাহির করিয়া সেই দিকে দৃষ্টিপাত করিতে লাগিলাম।

(গ) তাহার পরে দেখিলাম—সেই বনমধ্য হইতে কিরাতসৈন্যগণ আমাদের অভিমুখে আসিতেছে। রাজা কার্ত্তবীর্য্যার্জ্জুনকর্ত্তৃক সহস্রসংখ্যক বাহুদ্বারা সঞ্চালিত নর্ম্মদানদীর প্রবাহের

---

(१) उपागते। (२) तस्मिन् कानने। (३)...साध्वसोऽहं। (४)...तरलतर...।

(५) समुपजातविस्मयो दिदृक्षु:, समुपजातदिदृक्ष:, उपजातदिदृक्ष:।

(६) आपतितं, आपतन्तं। (७) अनिलबलचलितमिव, अनिलवशाच्चलितमिव।

रात्रीणां याम-संघातम्, अञ्जनशिला-स्तम्भ-सम्भारमिव क्षितिकम्प-विघूर्णितम्, अन्धकारपूरमिव (१) रविकिरणाकुलितम्, अन्तक-परिवारमिव परिभ्रमन्तम्, (घ) अवदारित-रसातलोद्गतमिव (२) दानवलोकम्, अशुभकर्म्म-समूहमिवैकत्र समागतम्, अनेक-(३) दण्डकारण्य-वासि-(४) मुनिजन-शाप-सार्थमिव सञ्चरन्तम्, अनवरत-शर-निकर-वर्षि-राम-निहत-खर दूषण-बलमिव तदपध्यानात् पिशाचता-

एकीति। कालरात्रीणां संहारनिशानां अतिगाढान्धकारतया निविड़कृष्णानामिति भावः। एकीभूतं एकत्र मिलितं यामसंघातं प्रहरसमूहमिव। अत्र द्रव्यस्वरूपोत्प्रेक्षालङ्कारः, घटाद्यवच्छेदकभेदेनाकाशभेदवत् क्रियाभेदेनैव कालस्य यामादिभेदाङ्गीकारात्, वस्तुतस्तु आकाशस्येव कालस्यैकत्वादिति केचित्। वस्तुतस्तु जात्युत्प्रेक्षैवेयमिति ध्येयम्।

अञ्जनेति। क्षितिकम्पेन भूमिकम्पेन निघूर्णितं चालितं, अञ्जनवत् कज्जलवत् कृष्णा इत्यर्थः ये शिलास्तम्भाः प्रस्तरनिर्म्मितस्थूणाः तेषां सम्भारं समूहमिव। अत्रोपमालङ्कारो लुप्तोपमया सङ्कीर्य्यते।

अन्धकारेति। रविकिरणैः आकुलितं सञ्चाल्य विक्षोभितं अन्धकाराणां पूरं प्रवाहमिव। अत्र जातिस्वरूपोत्प्रेक्षा। अन्धकारस्य द्रव्यत्वेन बहुत्वेन चान्धकारत्वस्य जातित्वात्। तथा चोक्तम्—

"तमस्तमालवर्णाभं चलतीति प्रतीयते। रूपवत्त्वात् क्रियावत्त्वात् द्रव्यन्तु दशमं तमः।"

आलोकसामान्याभावोऽन्धकार इति तु वैशेषिकादयः।

अन्तकेति। अन्तकपरिवारमिव यमस्य परिजनवर्गमिव गाढ़कृष्णवर्णत्वादिति भावः। अत्रापि जात्युत्प्रेक्षालङ्कारः।

(घ) अवेति। अवदारितेन विदारितेन रसातलेन भुवस्तलेन तत्पथेनेत्यर्थः उद्गतं पातालादुत्थितं दानवलोकं असुरजनमिव। अत्र जातिस्वरूपोत्प्रेक्षालङ्कारः।

अशुभेति। एकत्र समागतं मिलितं, अशुभकर्म्मणां पापकार्य्याणां समूहमिव। जात्युत्प्रेक्षा।

अनेकेति। अनेकेषां दण्डकारण्यवासिनां मुनिजनानां शापसार्थं अभिसम्पातगणमिव। जात्युत्प्रेक्षा। "सार्थो वणिक्समूहे स्यादपि संघातमात्रके।" इति मेदिनी।

अनेति। अनवरतशरनिकरवर्षिणा रामेण निहतं यत् खरदूषणयो तदाख्ययो राक्षसयोः बलं सैन्यं

ন্যায়, বায়ুবেগে উন্মূলিত হইয়া চলিত তমালবনের ন্যায়, একত্র মিলিত কালরাত্রির প্রহর-সমূহের ন্যায়, ভূমিকম্পে সঞ্চালিত কজ্জলতুল্য কৃষ্ণবর্ণ পাষাণস্তম্ভের ন্যায়, সূর্য্যকিরণ-তাড়িত অন্ধকারপ্রবাহের ন্যায়, বিচরণশীল যমের পরিবারবর্গের ন্যায়, (ঘ) ভূতল বিদারণ করিয়া পাতাল হইতে উত্থিত দানবগণের ন্যায়, একত্র সমবেত পাপকর্ম্মসমূহের ন্যায়, দণ্ডকারণ্যবাসী বহুসংখ্যক মুনিগণের বিচরণশীল অভিশাপসমূহের ন্যায়, রামচন্দ্রের অবিশ্রান্ত বাণবৃষ্টিতে নিহত হইয়া

(१)...पुञ्जमिव। (२)...तलोद्भूतमिव। (३) अशेष...। (४)...वासिन...

मुपगतम्, (१) कलिकाल-बन्धुवर्गमिव सङ्गतम्, (घ) अवगाह-प्रस्थित-(२)मिव वनमहिष-यूथम्, अचल-शिखर-स्थित-केसरि-(३)कराकृष्टि-पतन-शीर्णमिव (४) कालमेघ-(५) पटलम्, अखिलरूप-विनाशाय धूमकेतुजालमिव समुद्गतम्, अन्धकारिताशेषकाननम्, अनेक-सहस्रसंख्यम्, अतिभयजनकम्, (६) उत्पात-वेताल-व्रातमिव शवर-सैन्यमद्राक्षम्। (ङ)

मध्ये च तस्यातिमहतः (७) शवरसैन्यस्य प्रथमे वयसि वर्त्तमानं,

---

तदिव। तस्य रामस्य अपध्यानात् दुश्चिन्तनात् अनिष्टचिन्ताजनितप्रत्यवायात् पिशाचतां उपगतं प्राप्तं सत् उपस्थितमित्यर्थः। जात्युत्प्रेक्षा। एतेन सतामनिष्टचिन्तयाऽपि प्रत्यवायी भवतीति दर्शितम्।

कलीति। सङ्गतं एकत्र सम्मिलितं, कलिकालस्य बन्धुवर्गं सहृत्समूहमिव। जात्युत्प्रेक्षा।

(ङ) अवेति। अवगाहाय मज्जनाय प्रस्थितं चलितं। जात्युत्प्रेक्षा।

अचलेति। अचलशिखरस्थितस्य पर्वतशृङ्गस्थितस्य केसरिणः सिंहस्य कराभ्यां हस्ताभ्यां या आकृष्टि-राकर्षणं तया यत् पतनं भूतले पातः तेन शीर्णं बहुखण्डीभूतं कालमेघपटलं कृष्णमेघसमूहमिव। जात्युत्प्रेक्षा।

अखिलेति। अखिलानां सर्वेषां रूपाणां मृगाणां विनाशाय समुद्गतं उत्थितं धूमकेतूनां जालं समूहमिव। जात्युत्प्रेक्षा। "रूपं मृगेऽपि विज्ञेय"मिति हलायुधः।

अन्धेति। अन्धकारितं सञ्जातान्धकारं अशेषं काननं वनं येन तत्। अनेकानि सहस्राणि संख्या यस्य तत्। अतिभयजनकं अतिभयङ्करं। उत्पाताय अमङ्गलाय यो वेतालव्रातः भूताधिष्ठितशवसमूहस्तमिव। जात्युत्प्रेक्षा।

(च) मध्ये चेति। अतिमहतः अतिविशालस्य अतिविस्तृतस्य तस्य शवरसैन्यस्य मध्ये च मातङ्गक-नामानं शवरसेनापतिमपश्यमित्यग्रिमेणान्वयः। अत्र द्वितीयान्तपदानि शवरसेनापतेर्विशेषणानि। प्रथमे वयसि

---

তাঁহারই অনিষ্ট-চিন্তার পাপে পুনরায় পিশাচ হইয়া উপস্থিত খর ও দূষণের সৈন্যগণের ন্যায়, একস্থানে মিলিত কলিযুগের বন্ধুবর্গের ন্যায়, (ঙ) পম্পাসরোবরে অবগাহনের জন্য প্রস্থিত বন্য মহিষগণের ন্যায়, পর্ব্বতশৃঙ্গস্থিত সিংহের হস্তদ্বারা আকর্ষণে পতিত হইয়া খণ্ডখণ্ডীভূত কৃষ্ণবর্ণ মেঘসমূহের ন্যায়, সমস্ত বন্য জন্তুর বিনাশসূচনার জন্য উত্থিত ধূমকেতুসমূহের ন্যায় এবং জগতের অমঙ্গলের জন্য উপস্থিত ভূতগণের ন্যায় অত্যন্ত ভয়ঙ্কর বহুসহস্র কিরাতসৈন্য সমগ্র বন অন্ধকার করিয়া আসিতেছিল।

(চ) অতি বিস্তৃত সেই শবরসৈন্যের মধ্যে তরুণবয়স্ক মাতঙ্গনামক সেনাপতিকে দেখিলাম। তাহার শরীর অত্যন্ত কঠিন বলিয়া লৌহনির্ম্মিতের ন্যায় বোধ হইতেছিল;

---

(१) उपागतं। (२) अवगाहोत्थितप्रस्थितमिव। (३) अचलशिखरस्थसिंह...। (४) विशीर्णमिव।
(५) कालाभ्र...। (६)...जननं। (७) तस्य महतः।

अतिकर्कशत्वादायसमयमिव (१) (च) एकलव्यमिव जन्मान्तरागतम्, (२) (छ) उद्भिद्यमान-श्मश्रुराजितया प्रथम-मदलेखा-मण्ड्यमान-गण्डभित्तिमिव गजयूथपति-कुमारम्, (ज) असित-कुवलय-श्यामलेन (३) देहप्रभा-प्रवाहेण कालिन्दीजलेनेव पूरयन्तमरण्यम् (४) (झ) आकुटिलाग्रेण स्कन्धावलम्बिना कुन्तल-भारेण केशरिणमिव गजमदमलिनीकृतेन केशरकलापेनोपेतम्, (ञ) आयतललाटं, (५) अतितुङ्ग-घोरघोणं, (६) (ट) उपनीतस्यैककर्णाभरणतां भुजगफणामणेः (७)

---

ह्रस्ववयोऽपेक्षया पूर्वे वयसि वर्त्तमानं विद्यमानं युवानमित्यर्थः। अतिकर्कशत्वात् नितान्तकठिनदेहत्वात् आयसमयमिव लौहनिर्मितमिव। अत्र क्रियोत्प्रेक्षालङ्कारः। "आयसं लौह"मिति भरतः।

(छ) एकेति। जन्मान्तरे अन्यस्मिन् जन्मनि परजन्मनि आगतमुपस्थितं एकलव्यं तदाख्यं शवरमिव धनुर्वेदविशारदत्वादिति भावः। अत्र द्रव्योत्प्रेक्षालङ्कारः। पुरा खल्वेकलव्यो नाम कश्चन शवरो द्रोणप्रतिकृतिं निर्म्माय धनुर्वेदविद्यामुपलेभे, इति महाभारतवार्त्ता।

(ज) उद्भिद्यमानेति। उद्भिद्यमाना उत्पद्यमाना प्रकाशमाना श्मश्रुराजिः मुखलोमश्रेणिर्यस्य तस्य भावस्तया हेतुना, प्रथमया नवीनया मदलेखया कृष्णवर्णदानजलरेखया मण्ड्यमाने भूष्यमाणे गण्डभित्ती कपोलदेशौ यस्य तं, गजयूथपतेः करीन्द्रस्य कुमारः शावकस्तमिव। उपमालङ्कारः।

(झ) असितेति। असितकुवलयवत् नीलोत्पलवत् श्यामलेन, देहस्य प्रभाप्रवाहेण कान्तिस्रोतसा कालिन्दीजलेनेव यमुनावारिणेव अरण्यं पूरयन्तं पूर्णं कुर्वन्तं। अत्र तादृशदेहप्रभाप्रवाहेण अरण्यपूरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, लुप्तोपमा, द्रव्योत्प्रेक्षा च इत्येतेषामङ्गाङ्गिभावेन सङ्करः।

(ञ) आकुटिलेति। गजमदमलिनीकृतेन केशरकलापेन जटासमूहेन उपेतं केशरिणं सिंहमिव आकुटिलाग्रेण ईषद्वक्राग्रेण स्कन्धावलम्बिना कुन्तलभारेण केशकलापेन उपेतं युक्तम्। उपमालङ्कारः।

(ट) आयतेति। आयतललाटं विशालभालदेशं। अतितुङ्गा अत्युच्चा घोरा विशालरन्ध्रतया भीषणा च घोणा नासिका यस्य तम्। "घोणा नासा च नासिकेत्यमरः।"

---

(ছ) ধনুর্ব্বেদে সুদক্ষ বলিয়া, একলব্য যেন জন্মান্তর পরিগ্রহ করিয়া আসিয়াছে,—এইরূপ প্রতীতি হইতেছিল, (জ) মুখে অল্প অল্প শ্মশ্রু (দাড়ি) উঠিয়াছিল বলিয়া, নূতন মদজলরেখায় গণ্ডযুগল ভূষিত হইলে, প্রকাণ্ড হস্তিশাবকের ন্যায় তাহাকে দেখা যাইতেছিল; (ঝ) নীলপদ্মের ন্যায় শ্যামবর্ণ দেহকান্তিতে সে যেন যমুনাজলদ্বারা বনভূমি পূর্ণ করিতেছিল; (ঞ) সিংহ যেমন হস্তীর মদজলে মলিনতাপ্রাপ্ত জটাসমূহ ধারণ করে, মাতঙ্গও তেমন ঈষৎ কুটিলাগ্র ও কৃষ্ণবর্ণ স্কন্ধলম্বিত কেশকলাপ ধারণ করিতেছিল; (ট) মাতঙ্গের ললাটদেশ বিস্তৃত এবং নাসিকা

---

(१) आयसमिव। (२) जन्मान्तरगतं। (३) श्यामेन। (४) पूरितारण्यं।
(५) आयतललाटभासिनम्। (६) तुङ्गघोरघोणम्। (७) भुजङ्गफणामणेः, भुजगफणामणेः।

कार-वाचाल-शुककुलम्, (न) अनेक-सारिकोद्‌घुष्यमाण-सुब्रह्मण्यम्, (प) अरण्य-कुक्कुटोपभुज्यमान-वैश्वदेव-वलिपिण्डम्, (फ) आसन्न-वापी-कलहंस-पोत-भुज्यमान-नीवारवलिम्, (ब) एणी-जिह्वा-पल्लवोपलिह्यमान-मुनिबालकम्, (भ) अग्निकार्य्यार्द्धदग्ध-सिमसिमायमान (१)-कुश-समित्-कुसुमम्, (म) उपल-भग्न-नारिकेल-(२) रस-स्निग्ध-शिलातलम्, (य) अचिर-चुत्त-वल्कल-रस-पाटल-

(न) अनेति। अनवरतश्रवणेन सर्वदाकर्णनेन गृहीता: शिक्षिता: ये वषट्कारा हविर्दानमन्त्रा: तैः सदुच्चारणैरित्यर्थः वाचालं मुखरं शुककुलं यत्र तम्।

(प) अनेकेति। अनेकाभि: सारिकाभि: उद्‌घुष्यमाणं उच्चैरुच्चार्य्यमाणं सुब्रह्मण्यं वेदो यस्मिन् तम्, तासामपि तच्छ्रवणेन ग्रहणादिति भाव:।

(फ) अरण्येति। अरण्यकुक्कुटै: पक्षिविशेषै: उपभुज्यमाना: वैश्वदेववलिपिण्डा: पञ्चमयामार्द्धदत्त-विश्वदेवोद्देश्यकान्नादयो यत्र तं। वैश्वदेववलिदानमाह्निकतत्त्वेऽनुसन्धेयं।

(ब) आसन्नेति। आसन्नवापीनां सन्निहितदीर्घिकाणां ये कलहंसपोता: कादम्बशावका: तैः, भुज्यमाना: नीवाराणां मुनिधान्यानां वलय उपहारा यत्र तम्।

(भ) एणीति। एणीभिर्मृगीभि: जिह्वापल्लवै: विस्तृतीकृतरसनाभि: करणै: उपलिह्यमाना: आस्वाद्यमाना: स्पृश्यमाना इत्यर्थ: मुनिबालका यत्र तम्।

(म) अग्नीति। अग्निकार्य्ये होमे अर्द्धदग्धानि अतएव सिमसिमायमानानि 'सिम सिम' इत्येवं शब्दं कुर्वाणानि कुशसमित्कुसुमानि यत्र तम्।

(य) उपलेति। उपलै: पाषाणै: भग्नानि पाषाणान्तरेषु स्थापयित्वा मर्द्दितानि यानि नारिकेलानि फलानि तेषां रसैर्जलैर्निर्यासैर्वा स्निग्धानि सिक्तानि तैलाक्तीकृतानि वा शिलातलानि आस्तरणीभूतपाषाणा यत्र तम्।

(र) अचिरेति। अचिरच्युतानां वृक्षेभ्य: सद्योनिष्काशितानां वल्कलानां रसै: निर्यासै: पाटलं श्वेत-रक्तवर्णं भूतलं यस्मिन् तम्।

ছিল ; (ধ) ব্রাহ্মণবালকগণ বেদধ্বনি করিতেছিলেন ; (ন) শুকপক্ষিগণ, অবিশ্রান্ত শ্রবণ করায় অভ্যস্ত আহুতির মন্ত্র সকল উচ্চারণ করিতেছিল ; (প) বহুতর সারিকা উচ্চৈঃস্বরে বেদ পাঠ করিতেছিল ; (ফ) বনকুকুড়াগুলি বৈশ্বদেবের অন্ন ভোজন করিতেছিল ; (ব) সন্নিহিত-দীর্ঘিকা-স্থিত হংসশাবকগণ উড়ীধান্য ভোজন করিতেছিল ; (ভ) হরিণীগণ জিহ্বাদ্বারা মুনিবালকদিগকে লেহন করিতেছিল ; (ম) হোমকুণ্ডে নিক্ষিপ্ত অর্দ্ধদগ্ধ কুশ, সমিধ ও পুষ্প 'সিম সিম' শব্দ করিতেছিল ; (য) পাষাণদ্বারা নারিকেল ভগ্ন করিলে তাহার জলে নীচের পাষাণ সিক্ত হইতেছিল ; (র) বৃক্ষ হইতে সদ্য আনীত বল্কলের রসে ভূতল পাটলবর্ণ হইয়া

(१)...सिमसिमायमान...। (२)...नारिकेर...।

भूतलम्, (र) रक्तचन्दनोपलिप्तादित्यमण्डल-निहित-करवीर-कुसुमम्, (ल) इतस्ततो विक्षिप्त-भस्मलेखालङ्कृत-मुनिजन-भोजन-भूमिभागम्, (१) (व) परिचित-शाखामृग-कराकृष्ट-यष्टि-(२) निष्काश्यमान-प्रवेश्यमान-जरदन्ध-तापसम्, (श) इभ-करभकार्द्धोपभुक्त-पतितैः सरस्वती-भुजलता-विगलितैः (३) शङ्खवलयैरिव मृणाल-शकलैः कल्माषितम्, (ष) ऋषिजनार्थमेणकैर्विषाण-शिखरोत्खन्यमान-विविध-कन्दमूलम्, (स) अम्बु-पूर्ण-पुष्कर-पुटैर्वनकरिभिरापूर्य्यमाण-विटपाल-

---

(ल) रक्तेति। रक्तचन्दनेन उपलिप्ते चित्रिते आदित्यमण्डले सूर्य्यबिम्बे निहितं सूर्य्याय निवेद्य स्थापितं करवीरकुसुमं यत्र तम्।

(व) इत इति। इतस्ततो विक्षिप्ताभिर्विकीर्णाभिः भस्मनां लेखाभिः रेखाभिः अलङ्कृताः सीमाबद्धीकरणात् शोभिता मुनिजनानां भोजनभूमिभागा यत्र तम्। चरणस्पर्शादिनिवारणाय भस्मरेखाङ्कितत्वमिति बोध्यम्।

(श) परिचितेति। परिचितैः पूर्वावधिज्ञातस्वभावैः शाखामृगैर्वानरैः कराकृष्टयष्ट्या हस्ताकृष्टदण्डेन निष्काश्यमानाः केचिद्गृहाद्बहिष्क्रियमाणाः, प्रवेश्यमानाः केचिद्गृहमध्ये पूर्य्यमाणाश्च जरन्तो वृद्धाः अन्धाः तापसा यत्र तम्।

(ष) इभेति। इभकरभकैः करिशिशुभिः अर्द्धोपभुक्तैः पश्चात्पतितैः कथमपि तेषां वदनेभ्यो भ्रष्टैः, सरस्वत्या वाग्देव्या भुजलतायाः सकाशात् विगलितैः पतितैः शङ्खवलयैरिव स्थितैः मृणालशकलैर्बिसखण्डैः कल्माषितं विचित्रीकृतम्। अत्र जात्युत्प्रेक्षालङ्कारः। तेन च वाग्देव्याः सतताधिष्ठानं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः।

(स) ऋषीति। ऋषिजनार्थं मुनिजनभोजनार्थं एणकैर्मृगैः कर्त्तृभिः विषाणशिखरैः शृङ्गाग्रैः करणैः उत्खन्यमानानि उत्पाट्यमानानि विविधानि कन्दाः शालूकानि पद्मादीनां मूलानीत्यर्थः मूलानि मूलकादीनि च यत्र तम्।

(ह) अम्बुपूर्णेति। वनकरिभिः कर्त्तृभिः, अम्बुभिर्जलैः पूर्णानि यानि पुष्करपुटानि शुण्डाग्राणि

---

যাইতেছিল; (ল) ভূতলে রক্তচন্দনদ্বারা চিত্রিত সূর্য্যমণ্ডলের উপরে নিবেদিত করবীপুষ্প স্থাপিত ছিল; (ব) নানা দিকে ভস্মরেখাদ্বারা মুনিগণের ভোজনস্থান বিভক্ত করা ছিল; (শ) পরিচিত বানরগণ, হস্তদ্বারা যষ্টি আকর্ষণ করিয়া কোন কোন প্রাচীন অন্ধ তপস্বীকে গৃহ হইতে বাহির করিতেছিল, আবার কোন কোন প্রাচীন অন্ধ তপস্বীকে গৃহমধ্যে প্রবেশ করাইতেছিল; (ষ) হস্তিশাবকগণ অর্দ্ধাংশ ভোজন করিলে কোন কারণে তাহাদের মুখ হইতে নিপতিত মৃণালখণ্ড সকল, বাগ্‌দেবীর হস্ত হইতে স্খলিত শঙ্খবলয়ের ন্যায় থাকিয়া আশ্রমটিকে বিচিত্র করিয়াছিল; (স) মুনিগণের ভোজনের নিমিত্ত হরিণগণ শৃঙ্গের অগ্রদ্বারা নানাবিধ শালূক ও মূল উত্তোলন করিতেছিল; (হ) বন্য হস্তিগণ

---

(१)…सीमाङ्कित…भोजनभूमिपरिहारं। (२)…कराकृष्टनिष्काश्यमान…। (३)…बाहुलताविभूषणैः।

वालकम्, (क) ऋषि-कुमारकाकृष्यमाण-वनवराह-दंष्ट्रान्तराल-लग्न-शालूकम्, (क) उपजात-परिचयैः कलापिभिः पक्षपुट-पवन-सन्धुक्ष्यमाण-मुनिहोम-हुताशनम्, (क) आरब्धामृत-चरु-चारुगन्धम्, (ख) अर्द्धपक्व-पुरोडाश-पुण्य-परिमलामोदितम्, (१) (ग) अविच्छिन्नाज्यधारा-हुति-हुतभुग्घुङ्कार-(२) मुखरितम्, (घ) उपचर्य्य-माणातिथिवर्गम्, (ङ) पूज्यमान-पितृ-दैवतम्, (च) अर्च्यमान-(३) हरि-हर-

---

तैः करणैः, आपूर्य्यमाणानि भ्रियमाणानि, विटपानां छित्त्वा आनीय रोपितानां शाखानां, आलवालानि मूल-जलधारणखातानि यत्र तम्। "पुष्करं पङ्कजे व्योम्नि पयः करिकराग्रयोः।" इत्यादि विश्वः।

(क) ऋषीति। ऋषिकुमारकैः आकृष्यमाणानि वनवराहाणां दंष्ट्रान्तराललग्नानि शालूकानि उत्पलानां कन्दा मूलानीति यावत् यत्र तम्। "शालूकमेषां कन्दः स्या"दित्यमरः।

(क) उपेति। उपजातपरिचयैः पूर्वत एव मुनीनामहिंस्रस्वभाववेदिभिरिति तात्पर्य्यम्। कलापिभिर्मयूरैः पक्षपटानां पवनेन वायुना सन्धुक्ष्यमाणाः सन्दीप्यमानाः होमहुताशना यत्र तम्। एभिर्विशेषणैराश्रमस्य परमशान्तत्वं सूचितम्।

(ख) आरब्धेति। आरब्धस्य पक्तुं प्रवर्त्तितस्य अमृतचरोः घृतसंयुक्तचरोः चारुर्मनोहरो गन्धो यत्र तम्।

(ग) अर्द्धेति। अर्द्धपक्वस्य पुरोडाशस्य हवनीयद्रव्यविशेषस्य पुण्यपरिमलेन पवित्रगन्धेन आमोदितं आनन्दितम्।

(घ) अवीति। अविच्छिन्नाया आज्यधाराया घृतधारायाः आहुत्या प्रक्षेपेण यो हुतभुजो वह्नेर्हुङ्कारः 'हु" इति शब्दः तेन मुखरितं शब्दायमानीकृतम्। अत्र हुतभुग्घुङ्कार इति पदगतो दुःश्रवत्वदोषः, स च 'हव्यवाहन-हुङ्कार' इति पाठेन समाधेयः। नच 'हुतभुग्भाङ्कार' इति पाठान्तरं निर्दोषमिति वाच्यं वह्नेर्भाङ्कारानुत्पत्तेः।

(ङ) उपेति। उपचर्य्यमाणः सत्क्रियमाणः अतिथिवर्गो यत्र तम्।

(च) पूज्येति। पूज्यमानानि श्राद्धेन यथोपचारादिना च तोष्यमाणानि पितरो दैवतानि देवाश्च यत्र तम्।

---

জলপূর্ণ শুণ্ডাগ্রদ্বারা, রোপিত শাখার (কলম গাছের) আলবাল পূরণ করিতেছিল; (ক) ঋষিকুমারগণ, বন্য শূকরগণের দন্তমধ্যে সংলগ্ন শালূক (পদ্মমূল) আকর্ষণ করিতেছিল; (ক) পরিচিত ময়ূরগণ পক্ষপুটের বায়ুদ্বারা মুনিগণের হোমাগ্নি প্রজ্বলিত করিয়া দিতেছিল; (খ) পচ্যমান ঘৃতাক্ত চরুর মনোহর গন্ধ বহির্গত হইতেছিল; (গ) অর্দ্ধপক্ব পুরোডাশের (যজ্ঞীয় পিটার) পবিত্র গন্ধে আমোদিত করিয়াছিল; (ঘ) অবিচ্ছিন্ন ঘৃতধারার আহুতিতে হোমাগ্নি হইতে 'হুং' 'হুং' শব্দ উঠিয়া আশ্রমটিকে মুখরিত করিয়াছিল; (ঙ) কেহ কেহ অতিথিদিগের সেবা করিতেছিলেন; (চ) কেহ পিতৃশ্রাদ্ধ, কেহ বা দেবতা-

---

(१)...पुण्यपरिमला, पुरोडाशपरिमला...। (२) उग्रहुङ्कार..., भाङ्कार...। (३) अभ्यर्च्यमान...।

पितामहम्, (छ) उपदिश्यमान-(१) श्राद्धकल्पम्, (ज) व्याख्यायमान-यज्ञ-विद्यम्, (झ) आलोच्यमान-धर्म्मशास्त्रम्, (ञ) पठ्यमान-(२) विविध-पुस्तकम्, (ट) विचार्य्यमाण-सकल-शास्त्रार्थम्, (ठ) आरभ्यमाण-पर्णशालम्, (ड) उपलिप्य-मानाजिरम्, (ढ) उपमृज्यमानो-(३) टजाभ्यन्तरम्, (ण) आबध्यमान-ध्यानम्, (त) साध्यमान-मन्त्रम्, (थ) अभ्यस्यमान-योगम् (द) उपक्रियमाण-(४) वनदेवताबलिम्, (ध) निर्वर्त्त्यमान-मौञ्ज-(५) मेखलम्, (न) प्रक्षाल्यमान-(६)

(छ) अर्च्येति। अर्च्यमानः पूज्यमानः, हरिर्विष्णुः, हरः शिवः, पितामहो ब्रह्मा च यत्र तम्।

(ज) उपेति। उपदिश्यमानः अध्याप्यमानः श्राद्धकल्पो गोभिलादिप्रणीतः श्राद्धविधिर्यत्र तम्।

(झ) व्याख्येति। व्याख्यायमाना विव्रियमाणा यज्ञविद्या अश्वमेधादियज्ञविधायकशास्त्रं यत्र तम्।

(ञ) आलोच्येति। आलोच्यमानानि धर्म्मशास्त्राणि मन्वादिकृतसंहिता यत्र तम्।

(ट) पठ्येति। पठ्यमानानि विविधानि पुस्तकानि यत्र तम्।

(ठ) विचेति। विचार्य्यमाणा वितर्क्यमाणाः सकलशास्त्रार्था यत्र तम्।

(ड) आरभ्येति। आरभ्यमाणाः निर्म्मातुं प्रवर्त्त्यमानाः पर्णशाला यत्र तम्।

(ढ) उपेति। गोमयादिना उपलिप्यमानानि अजिराणि चत्वराणि यत्र तम्।

(ण) उपेति। उपमृज्यमानानि सम्मार्ज्जन्यादिना परिष्क्रियमाणानि उटजानां पर्णशालानां अभ्यन्तराणि यत्र तम्।

(त) आबध्येति। आबध्यमानं क्रियमाणं ध्यानं प्रत्ययैकतानता यस्मिन् तम्।

(थ) साध्येति। साध्यमानः पुरश्चरणेन सिद्धिं प्राप्यमानः मन्त्रो यत्र तम्।

(द) अभ्यस्येति। अभ्यस्यमानः असकृदनुष्ठीयमानः योगश्चित्तवृत्तिनिरोधो यत्र तम्।

(ध) उपेति। उपक्रियमाणा दीयमाना वनदेवताभ्यो बलयः पूजासामग्र्यो यत्र तम्।

(न) निर्वर्त्त्येति। निर्वर्त्त्यमाना निर्म्मीयमाना मौञ्जी मुञ्जोपादाना मेखला यत्र तम्।

পূজা করিতেছিলেন; (ছ) ভিন্ন ভিন্ন স্থানে ব্রহ্মা, বিষ্ণু ও শিবের পূজা হইতেছিল; (জ) কেহ শ্রাদ্ধশাস্ত্র পড়াইতেছিলেন; (ঝ) কেহ যজ্ঞশাস্ত্রের ব্যাখ্যা করিতেছিলেন; (ঞ) অনেকে ধর্ম্মশাস্ত্রের আলোচনা করিতেছিলেন; (ট) কোন স্থানে নানাবিধ পুস্তক পাঠ হইতেছিল; (ঠ) অনেকে সকল শাস্ত্রের অর্থ নিয়া বিচার করিতেছিলেন; (ড) কেহ পর্ণশালা নির্ম্মাণ করিতে আরম্ভ করিয়াছিলেন; (ঢ) কেহ উঠান লেপিতেছিলেন; (ণ) কেহ পর্ণশালার অভ্যন্তর পরিষ্কার করিতেছিলেন; (ত-থ-দ) কেহ ধ্যান, কেহ মন্ত্রসাধনা, কেহ বা যোগাভ্যাস করিতেছিলেন; (ধ) কেহ বনদেবতাদিগকে পূজার উপহার দিতেছিলেন; (ন) কেহ মুঞ্জদ্বারা মেখলা নির্ম্মাণ করিতেছিলেন; (প) কেহ বল্কল

(१) उद्दिश्यमान...। (२) वाच्यमान...। (३) अपमृज्यमान...।
(४) उपह्रियमाण...। (५) मुञ्ज...। (६) धाव्यमान...।

वल्कलम्, (प) उपसंगृह्यमाण-समिधम्, (फ) संस्क्रियमाण (१) कृष्णाजिनम्, (ब) गृह्यमाण-(२) गवेधुकम्, (भ) शोष्यमाण-(३) पुष्कर-बीजम्, (म) ग्रथ्यमानाक्ष-मालम्, (य) गृह्यमाण-त्रिपुण्ड्रकं, (र) न्यस्यमान-वेत्रदण्डम् (४) (ल) आपूर्य्यमाण-कमण्डलुम्, (व) अदृष्टपूर्वं कलिकालस्य, अपरिचितमनृतस्य, अश्रुतपूर्वमनङ्गस्य, (श) अजयोनिमिव त्रिभुवन-वन्दितम्, (ष) असुरारि-

---

(प) प्रक्षेति। प्रक्षाल्यमानं जलेन शोध्यमानं वल्कलं यत्र तम्।

(फ) उपेति। उपसंगृह्यमाणा आह्रियमाणाः समिधो यत्र तम्।

(ब) संस्क्रीति। संस्क्रियमाणं पिच्छिकादिना परिष्क्रियमाणं कृष्णाजिनं कृष्णसारचर्म्म यत्र तम्।

(भ) गृह्येति। गृह्यमाणा आदीयमाना गवेधुका धान्यविशेषो यस्मिन् तम्।

(म) शोष्येति। शोष्यमाणानि आतपेन शुष्कतां नीयमानानि पुष्कराणां पद्मानां बीजानि यत्र तम्। जपमालानिर्म्माणार्थमेतदिति बोध्यम्।

(य) ग्रथ्येति। ग्रथ्यमाना अक्षमाला जपमाला यस्मिन् तम्।

(र) गृह्येति। गृह्यमाणं ललाटे धार्य्यमाणं त्रिपुण्ड्रकं तिलकविशेषो यत्र तम्।

(ल) न्यस्येति। न्यस्यमानो दूरादागत्य भूमौ स्थाप्यमानः वेत्रदण्डो यत्र तम्।

(व) आपूर्य्येति। आपूर्य्यमाणो जलैर्भ्रियमाणः कमण्डलुर्जलपात्रविशेषो यस्मिन् तं। एषु यथासम्भवं 'केनचित्' 'केचित्' इति कर्त्तृपदं योजनीयम्।

(श) अदृष्टेति। न विद्यते दृष्टं दर्शनं पूर्वं यत्र तम्। भावे क्तः, एवमन्ययोरपि। पापाभावादिति भावः। अनृतस्य वितथस्य, न विद्यते परिचितं परिचयो यत्र तम्, सर्वदा सत्यव्यवहारादिति भावः। अनङ्गस्य कामस्य, न विद्यते श्रुतं श्रवणं पूर्वंस्मिन् यस्य तम्, तत्कृतविकाराभावादिति भावः।

(ष) अजेति। अजयोनिं ब्रह्माणमिव त्रिभुवनवन्दितं त्रिजगत्पूजितम्, असाधारणपुण्यधामत्वात् प्रजापतित्वाच्चेति भावः। अत्र पूर्णोपमालङ्कारः।

---

প্রক্ষালন করিতেছিলেন; (ফ) কেহ সমিধ আহরণ করিতেছিলেন; (ব) কেহ কৃষ্ণসারের চর্ম্ম পরিষ্কার করিতেছিলেন; (ভ) কেহ গড়গড়ে ধান লইতেছিলেন; (ম) কেহ পদ্মের বীজ শুকাইতেছিলেন; (য) কেহ জপের মালা গাঁথিতেছিলেন; (র) কেহ ত্রিপুণ্ড্র ধারণ করিতেছিলেন; (ল) কেহ বেত্রযষ্টি রাখিতেছিলেন; (ব) কেহ কমণ্ডলুতে জল পূরণ করিতেছিলেন। (শ) কলিকাল সে আশ্রম দেখিয়াছিল না, মিথ্যার সেখানে পরিচয় ছিল না এবং কামদেব সে আশ্রমের সংবাদ শোনেন নাই; (ষ) আর ব্রহ্মার ন্যায় সেই

---

(१) उपसंस्क्रियमाण...। (२) निग्टह्यमाण...। (३) पोष्यमाण...।

(४) निदण्डकं, सत्क्रियमाणपरिव्राजकम्।

मिव प्रकटित-वराह-नरसिंहरूपम्, (१) (स) सांख्यमिव कपिलाधिष्ठितम्, (ह) मथुरोपवनमिव (२) बलावलीढ़-दर्पित-धेनुकम्, (च) उदयनमिवानन्दित-वत्स-कुलम्, (क) किम्पुरुषाधिराज्यमिव मुनिजन-गृहीत-कलसा-(३) भिषिक्त-

(स) असुरेति। असुरारिं विष्णुमिव, प्रकटितानि व्यक्तीकृतानि वराहाः, नराः, सिंहाः, रूपाणि मृगाश्च येन तं तेषां तत्रावस्थानादिति भावः, पक्षे प्रकटिते प्रकाशिते वराहनरसिंहयोरवतारयो रूपे आकृती येन तम्। पूर्णोपमा। "रूपं मृगेऽपि विज्ञेय"मिति हलायुधः।

(ह) सांख्यमिति। सांख्यं दर्शनमिव, कपिलया स्वर्णवर्णया गवा, कपिलेन सांख्यप्रणेत्रा मुनिविशेषेण च अधिष्ठितं आश्रितम्। पूर्णोपमा।

(च) मथुरेति। मथुराया नगर्य्या उपवनमिव, बलावलीढ़ा दैहिकबलान्विता अतएव दर्पिताः सञ्जात-दर्पाः धेनवो नवप्रसूता गावो यस्मिन् तम्; अत्र "शेषाद्वा"इति कप्रत्ययः। अन्यत्र तु बलावलीढ़ो बलवान् दर्पितश्च धेनुको धेनुकनामासुरो यत्र तम्। पूर्णोपमा। धेनुकासुरः कृष्णेन हत इति भागवते द्रष्टव्यम्।

(क) उदेति। उदयनं तदाख्यं पाण्डववंशजातं कौशाम्बीराजमिव, आनन्दितं घासजलदानादिना सन्तोषितं वत्सकुलं गोवत्ससमूहो यस्मिन् तम्, पक्षे आनन्दितं सद्व्यवहारादिना परितोषितं वत्सकुलं वत्सदेशीयजनसमूहो येन तम्, तस्य वत्सदेशराजत्वात्। पूर्णोपमा। पुरा उदयनो नाम राजा न्यायमार्गेण परिपालयन् प्रजास्तोषयामासेति कथासरित्सागरवार्त्ता।

(ख) किम्पुरुषेति। किम्पुरुषाणां किन्नराणां अधिराज्यं राष्ट्रमिव, मुनिजनैर्गृहीता ये कलसा जलपूर्णकुम्भास्तैरभिषिच्यमाना द्रुमा वृक्षा यत्र तम्, अन्यत्र मुनिजनगृहीतकलसैः अभिषिच्यमानो राजेत्र अभि-षिच्यमानः द्रुमो नाम राजा यत्र तत्। पूर्णोपमा। पुरा किल मुनयः किन्नरराजेत्र द्रुममभिषिषिचुरित्यपि कथासरित्सागरे द्रष्टव्यम्।

আশ্রম ত্রিজগতের পূজনীয় ছিল; (স) নারায়ণ যেমন বরাহ ও নরসিংহ অবতার ধারণ করিয়াছিলেন, সেই আশ্রমও তেমন বরাহ, মনুষ্য, সিংহ ও হরিণ—এই সকল ধারণ করিতে-ছিল; (হ) সাংখ্যদর্শন যেমন কপিলের আশ্রিত, সেই আশ্রমও তেমন কপিলাধেনুগণ-কর্ত্তৃক আশ্রিত; (ক্ষ) মথুরা নগরীর উপবনে যেমন বলবান্ ও দর্পশালী ধেনুকাসুর ছিল, সেই আশ্রমেও তেমন বলবতী ও তেজস্বিনী ধেনুগণ ছিল; (ক) উদয়ন রাজা যেমন বৎসদেশীয় প্রজাগণকে আনন্দিত করিয়াছিলেন, সেই আশ্রমে মুনিগণও তেমন গোবৎস-দিগকে আনন্দিত করিতেছিলেন; (থ) কিন্নরদিগের রাজ্যে যেমন মুনিগণ জলপূর্ণ কলস ধারণ করিয়া দ্রুমনামে রাজাকে অভিষিক্ত করিয়াছিলেন, সেই আশ্রমেও তেমন মুনিগণ

(१)...नरहरिवराहरूपं। (२) मधुरोपवनमिव। (३)...जलकलशा...।

मान-द्रुमम्, ( ख ) निदाघसमयावसानमिव आसन्न-(१) जलप्रपातम्, ( ग ) जलधरसमयमिव वन-गहन-मध्य-सुख-सुप्त-हरिम्, ( घ ) हनूमन्तमिव (२) शिला-शकल-प्रहार-सञ्चूर्णिताक्षास्थि-(३) सञ्चयम्, ( ङ ) खाण्डव-विनाशोद्यतार्जुनमिव प्रारब्धाग्निकार्य्यम्, ( च ) सुरभि-विलेपनधरमपि सतताविर्भूत-(४)

( ग ) निदाघेति। निदाघसमयावसानमिव ग्रीष्मकालशेषमिव, आसन्नौ निकटवर्त्तिनौ, जलं दीर्घिकासलिलं प्रपातो निर्झरश्च तौ यस्य तम्, पक्षे आसन्नो निकटवर्त्ती जलप्रपातो वृष्टिजलपतनं यस्य तत्। पूर्णोपमा। "प्रपातो निर्झरेऽतटे" इति मेदिनी।

( घ ) जलेति। जलधरसमयमिव वर्षाकालमिव, वने अरण्ये यद्गहनं गह्वरप्रदेशः तस्य मध्ये सुखेन उपद्रवाभावान्निश्चिन्तभावेन सुप्ता हरयः सिंहा यस्मिन् तम्। अन्यत्र तु वनस्य सागरजलस्य गहने गह्वरवद्गभीरे मध्ये मध्यस्थाने सुखेन सुप्तो हरिर्नारायणो यस्मिन् तम्। "शेते विष्णुः सदाषाढ़े भाद्रे च परिवर्त्तते।" इत्यादिस्मृतेरिति भावः। अत्र वनगहनशब्दयोः पर्य्यायतया अर्थस्यापाततः पुनरुक्ततापतीतेः परश्लोकरूपभेदावगमात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः पूर्णोपमा चानयोरङ्गाङ्गिभावेन सङ्करः। "वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने" इति हेमः। "गहनं गह्वरे दुःखे वने" इति त्रिकाण्डशेषः।

( ङ ) हनूमन्तमिति। हनूमन्तं अञ्जनापुत्रमिव, शिलाशकलस्य प्रस्तरखण्डस्य प्रहारेण सञ्चूर्णितः तैलनिर्म्माणार्थं पिष्टः अक्षाणां विभीतकफलानां अस्थिसञ्चयो मध्यवर्त्ती कठिनांशो यत्र तम्, अन्यत्र तु शिलाशकलप्रहारेण सञ्चूर्णितो भग्नः अक्षस्य अक्षनामकरावणपुत्रस्य अस्थिसञ्चयो येन तम्। पूर्णोपमा। "अक्षो विभीतको वृक्षः पाशकोऽक्षोऽक्षमिन्द्रियम्। अक्षो रावणिरित्युक्तः कृत्यमक्षन्तु निस्वगम्।" इत्यनेकार्थध्वनिमञ्जरी। पुरा लङ्कादाहानन्तरं हनूमान् पाषाणप्रहारेण अक्षनामानं रावणपुत्रं निहतवानिति रामायणम्।

( च ) खाण्डवेति। खाण्डवस्य तदाख्यवनस्य विनाशे दाहने उद्यतो योऽर्जुनस्तृतीयपाण्डवस्तमिव, प्रारब्धं उपक्रान्तं अग्निकार्य्यं होमो यत्र तम्, पक्षे प्रारब्धं दाहविघ्ननिवारणेनोपक्रान्तं अग्नेः कार्य्यं वह्निक्रिया येन तम्। पूर्णोपमा। अस्येतिहासः पूर्वमुक्तः।

জলপূর্ণ কলস ধারণ করিয়া বৃক্ষসমূহকে অভিষিক্ত করিতেছিলেন; (গ) গ্রীষ্মকালের শেষে যেমন বৃষ্টিপাত নিকটবর্ত্তী হয়, সেই আশ্রমেও তেমন দীর্ঘিকার ও প্রস্রবণের জল নিকটবর্ত্তী ছিল; (ঘ) বর্ষাকালে (আষাঢ়মাসে) নারায়ণ যেমন গভীর সাগরজলমধ্যে সুখে নিদ্রিত হন, সেই আশ্রমেও তেমন সিংহগণ বনের অন্তর্গত গহ্বরমধ্যে সুখে নিদ্রিত ছিল; (ঙ) হনুমান্ যেমন প্রস্তরখণ্ডের আঘাতে রাবণের পুত্র অক্ষকুমারের অস্থিসমূহ চূর্ণ করিয়াছিল, মুনিগণও তেমন তৈল-নির্ম্মাণের জন্য প্রস্তরখণ্ডের আঘাতে বহেড়ার বীজ সকল চূর্ণ করিতেছিলেন; (চ) খাণ্ডববন-দাহনে প্রবৃত্ত অর্জ্জুন যেমন অগ্নির কার্য্য আরম্ভ করিয়াছিলেন,

(१) प्रत्यासन्न...। (२) अनिलसुतमिव।
(३) शिलाशकलसञ्चूर्णिताक्षास्थि...। (४)...हव्यधूमगन्धं।

धूम-गन्धम्, (छ) मातङ्ग-कुलाध्यासितमपि पवित्रम्, (ज) उन्नसित-धूमकेतु-शत-(१) मपि प्रशान्तोपद्रवम्, (झ) परिपूर्ण-द्विजपति-मण्डल-सनाथमपि सदा-सन्निहित-तरु-गहनान्धकारम्, (ञ) अतिरमणीयमपरमिव ब्रह्मलोक-माश्रममपश्यम्। (ट)

यत्र च मलिनता हविर्धूमेषु न चरितेषु, मुखरागः शुकेषु न कोपेषु, तीक्ष्णता कुशाग्रेषु न स्वभावेषु, चञ्चलता कदली-दलेषु न मनःसु, चक्षूरागः

(छ) सुरभीति। सुरभि सुगन्धि विलेपनं अङ्गरागयोग्यं चन्दनादिकं धरतीति सः, तं तथोक्तमपि, सततमाविर्भूतो धूमगन्धो यस्मात्तमिति सौरभाविर्भावसम्भवे धूमगन्धाविर्भावाद्विरोधः, सुरभेर्गोः, विलिप्यते-ऽनेनेति विलेपनं गोमयं यस्यां सा तादृशी धरा भूमिर्यत्र तं तथोक्तमिति तत्समाधानम्। अत्र विरोधा-लङ्कारः। "सुरभिर्गवि च स्त्रिया"मित्यमरः।

(ज) मातङ्गेति। मातङ्गकुलेन चण्डालसमूहेन अध्यासितमाश्रितमपि पवित्रमिति विरोधः, मातङ्ग-कुलेन हस्तिसमूहेनेति तत्समाधानं। विरोधालङ्कारः। "मातङ्गः श्वपचे गजे" इति विश्वः।

(झ) उन्नसितेति। उन्नसितं उत्थितं धूमकेतुशतं यत्र तादृशमपि प्रशान्तोपद्रवमिति विरोधः, धूमकेतुशतं वह्निसमूहो यत्रेति तत्समाधानम्। विरोधालङ्कारः। "धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः।" इति विश्वः।

(ञ) परीति। परिपूर्णेन द्विजपतिमण्डलेन चन्द्रमण्डलेन सनाथः सहितस्तं तादृशमपि, सदा सन्निहितः अवस्थितः तरुगहनेषु अन्धकारो यत्र तमिति विरोधः, परिपूर्णेन ज्ञानपूर्णेन द्विजपतिमण्डलेन ब्राह्मणश्रेष्ठगणेन सनाथस्तमिति तत्समाधानम्। विरोधालङ्कारः।

(ट) अतीति। अपरं ब्रह्मलोकमिवेति द्रव्योत्प्रेक्षालङ्कारः।

(ठ) यत्रेति। अपि चेति चार्थः। यत्र आश्रमे। चरितेषु जनानां चरित्रेषु, मलिनता हिंसा-पैशुन्यादिपापप्रवृत्तिः नासीदिति शेषः। एवमन्यत्रापि। मैत्र्यादिभावनया शुद्धचित्तत्वादिति भावः। इतः प्रभृति

সেই আশ্রমে মুনিগণও তেমন অগ্নিকার্য্য (হোম) আরম্ভ করিয়াছিলেন; (ছ) সেই আশ্রমে সুগন্ধিচন্দনপ্রভৃতি অনুলেপনদ্রব্য (সমাধানপক্ষে—গোময়লিপ্ত ভূমি) থাকিলেও সর্ব্বদাই ধূমের গন্ধ বাহির হইতেছিল; (জ) সেই আশ্রম চণ্ডালগণ কর্ত্তৃক (সমাধানপক্ষে—হস্তিসমূহকর্ত্তৃক) আশ্রিত হইলেও পবিত্র ছিল; (ঝ) বহুসংখ্যক ধূমকেতু (সমাধানপক্ষে—হোমের অগ্নি) উত্থিত হইলেও সে আশ্রমে উপদ্রব ছিল না; (ঞ) সম্পূর্ণ চন্দ্রমণ্ডল (সমাধানপক্ষে—জ্ঞানী ব্রাহ্মণশ্রেষ্ঠগণ) সংযুক্ত হইলেও সেই আশ্রমের বনমধ্যে সর্ব্বদা অন্ধকার ছিল; (ট) দ্বিতীয় ব্রহ্মলোকের ন্যায় অতি রমণীয় সেই আশ্রম দেখিলাম।

(ঠ) আর যে আশ্রমে হোমাগ্নির ধূমেই মলিনতা (ধূম্রবর্ণ) ছিল, কিন্তু কাহারও

(१)...सहस्र...।

कोकिलेषु न पर-कलत्रेषु, कण्ठग्रहः कमण्डलुषु न सुरतेषु, मेखलाबन्धो व्रतेषु नेर्ष्याकलहेषु, स्तनस्पर्शो होमधेनुषु न वनितासु, (१) पक्षपातः कृकवाकुषु (२) न विद्या-विवादेषु, भ्रान्तिरनलप्रदक्षिणेषु (३) न शास्त्रेषु, (४) वसु-सङ्कीर्त्तनं दिव्यकथासु न तृष्णासु, (५) गणना रुद्राक्ष-वलयेषु न शरीरेषु,

---

मुखभङ्गविकारो जरया न धनाभिमानेन इत्यन्तं यावत् प्रत्येकवाक्ये अप्रश्नेऽपि नञा अन्यनिरासात् श्लेष-सङ्कीर्णा शाब्दी परिसंख्यालङ्कारः। मुखरागो वदनस्य रक्तिमा। कोपेष्विति निमित्तसप्तमी तेन कोप-निमित्तको मुखरक्तिमा नासीदित्यर्थः कोपस्यैवाभावात्। कुशाग्रेषु तीक्ष्णता भेदनोपयोगिनी सूक्ष्मता, किन्तु स्वभावेषु तीक्ष्णता क्रूरता नासीत् निर्म्मलचित्तत्वात्। मनःसु चञ्चलता अधीरता न, उपद्रवाभावात्। कोकिलेषु चक्षूरागो नयनलौहित्यं, किन्तु परकलत्रेषु चक्षूरागो नयनासक्तिर्न, कामाभावात्। कमण्डलुषु कण्ठग्रहो गलधारणं, किन्तु सुरतेषु न, ऊर्द्ध्वरेतसां तदभावादिति भावः। व्रतेषु उपनयनादिनियमेषु मेखलाबन्धो मौञ्जीबन्धनं, किन्तु ईर्ष्याकलहेषु ईर्ष्यामूलकविवादेषु मेखलाबन्धः खड्गमुष्टिधारणं न, तेषा-मीर्ष्याया एवाभावात्। "मेखला मुष्टिदार्थ्यार्थमुपर्य्यधो लौहबन्धः। इत्येके" इत्यमरटीकायां भरतः। होम-धेनुषु स्तनस्पर्शो दुग्धदोहनार्थः, किन्तु स वनितासु न, कामासक्त्यभावात्। कृकवाकुषु कुक्कुटपक्षिषु पक्षपातः पक्षाभ्यां पतनम्, किन्तु विद्याविवादेषु शास्त्रतर्केषु पक्षपातो मध्यस्थस्य वादिप्रतिवादिनोरेकतरसहायताकरणं न, तस्यान्याय्यत्वात्। अत्र पक्षिसामान्यस्यैव पक्षाभ्यां पतनसम्भवे केवलकृकवाकूपादानादविशेषे विशेषाख्यदोषः, स च 'पक्षिषु' इति पाठेन समाधेयः। अनलप्रदक्षिणेषु होमाग्निप्रदक्षिणकार्य्येषु भ्रान्तिः परिभ्रमणं, शास्त्रेषु न भ्रान्ति-र्भ्रमो मिथ्याज्ञानम्, यथायथनिर्णयात्। दिव्यकथासु स्वर्गीयोपाख्यानकथनेषु वसूनां द्युप्रभृतीनां देवविशेषाणां सङ्कीर्त्तनमुल्लेखः, किन्तु तृष्णास्वित्यपि निमित्तसप्तमी, तेन धनतृष्णानिमित्तको वसुनो धनस्य सङ्कीर्त्तनं न,

---

চরিত্রে মলিনতা ( পরহিংসাপ্রভৃতি পাপবৃত্তি ) ছিল না ; শুকপক্ষিগণেরই মুখ রক্তবর্ণ ছিল, কিন্তু ক্রোধে কাহারও মুখ রক্তবর্ণ হইত না ; কুশাগ্রেই তীক্ষ্ণতা ছিল, কিন্তু কাহারও স্বভাবে তীক্ষ্ণতা ( ক্রূরতা ) ছিল না ; কদলীপত্রেই চাঞ্চল্য ছিল, কিন্তু কাহারও মনে চাঞ্চল্য ছিল না ; কোকিলগণেরই চক্ষূরাগ ( নয়ন রক্তবর্ণ ) ছিল, কিন্তু পরস্ত্রীর প্রতি কাহারও চক্ষূরাগ ( নয়ন আকর্ষণ ) ছিল না ; কমণ্ডলুরই কণ্ঠধারণ ছিল, কিন্তু সম্ভোগের বেলায় কণ্ঠ-ধারণ ছিল না ; উপনয়নেই মেখলাবন্ধন ( মৌঞ্জী ধারণ ) ছিল, কিন্তু ঈর্ষ্যামূলক বিবাদে মেখলাবন্ধন ( তরবারির মুষ্টিধারণ ) ছিল না ; হোমধেনুরই স্তনস্পর্শ হইত, কিন্তু স্ত্রীর নহে ; কুক্কুটপক্ষিগণেরই পক্ষপাত ( পক্ষদ্বারা ভূমিতে পতন ) ছিল, কিন্তু শাস্ত্রীয় তর্কে পক্ষপাত ছিল না ; হোমাগ্নিপ্রদক্ষিণ করিবার সময়েই ভ্রান্তি ( পরিভ্রমণ ) ছিল, কিন্তু শাস্ত্রে ভ্রান্তি ( ভ্রম ) ছিল না ; স্বর্গের কোন উপাখ্যান বলিবার সময়েই বসুগণের ( অষ্টবসুর ) উল্লেখ হইত, কিন্তু ধনের লোভে বসুর ( ধনের ) উল্লেখ হইত না ; জপের সময় রুদ্রাক্ষমালাতেই গণনা

---

(१) कामिनीषु। (२) कुक्कुटेषु। (३)...प्रदक्षिणासु। (४) शास्त्रार्थेषु। (५) जलतृष्णासु।

मुनि-वाल-नाशः क्रतु-दीक्षया न मृत्युना, रामानुरागो रामायणेन न यौवनेन, सुखभङ्ग-विकारो जरया न धनाभिमानेन। (ঠ)

यत्र च महाभारते शकुनि-वधः, पुराणे वायु-प्रलपितम्, वयःपरिणामे (१) द्विज-पतनम्, उपवन-चन्दनेषु जाड्यम्, अग्नीनां भूतिमत्त्वम्, एणकानां गीत-

---

तेषां धनतृष्णाया एवाभावात्। रुद्राक्षाणां वलयेषु वलयीकृतमालासु गणना जपादौ संख्या, किन्तु शरीरेषु न गणना नादरः, तत्र तेषां निःस्पृहत्वात्। क्रतुदीक्षया यज्ञारम्भेण हेतुना मुनीनां वालनाशः केशादिच्छेदनं "केशवापः पूर्वेद्यु"रिति श्रुतेः, किन्तु मृत्युना मुनीनां वालनाशः शिशुध्वंसो न, तपःप्रभावेणाकालमृत्यु-विरहात्। रामायणेन रामायणे गुणग्रामश्रवणेन रामे दाशरथौ अनुरागो भक्तिः, किन्तु यौवनेन यौवनो-चितकामावेशेन रामायां रमण्यां अनुराग आसक्तिर्न, तपोमाहात्म्येन तेषां यौवनेऽपि कामावेशाभावात्। जरया वार्द्धक्येन मुखस्य भङ्गविकारश्चर्म्मादिशैथिल्यरूपा विकृतिः, किन्तु धनाभिमानेन मुखस्य भङ्गविकारः परेषु भ्रूकुट्यादिविकृतिर्न, तेषां धनाभिमानयोरुभयोरेवाभावात्।

(ड) यत्रेति। अत्रापि अपि चेति चार्थः। महाभारत एव शकुनेर्दुर्य्योधनमातुलस्य वधः सहदेवेन हत्या श्रूयते स्म, न तु यत्र कुत्रचित् स्थाने शकुनेः पक्षिणो वधो दृष्टः, तेषां हिंसाविरहात्। इतः प्रभृति 'मूलानामधोगति'रित्यन्तं यावत् प्रत्येकवाक्ये अप्रश्नेऽपि तात्पर्य्येणान्यनिरासात् श्लेषानुप्राणिता आर्थी परिसंख्यालङ्कारः। पुराणे पुराणशास्त्र एव वायोर्देवतायाः प्रलपितं प्रकर्षेणोक्तिर्वर्णनमिति यावत्, न तु कुत्रापि गृहे वायुना उन्मादरोगेण प्रलपितं कस्यापि अनर्थकं वच आसीत् तादृशरोगाभावात्। वयः-परिणामे वार्द्धक्य एव द्विजानां दन्तानां पतनं, न तु महापातकादौ सति द्विजानां विप्राणां पतनं पातित्यम्, तेषां पापस्यैवाभावात्। "दन्तविप्राण्डजा द्विजा" इत्यमरः। उपवनस्य चन्दनेषु तरुष्वेव जाड्यं शैत्यं, न तु जनेषु जाड्यं मूर्खता सर्व्वेषामेव पूर्णशिक्षालाभात्। अग्नीनामेव भूतिमत्त्वं भस्मवत्त्वं, न तु मुनीनां

---

(সংখ্যা) ছিল, কিন্তু শরীরের প্রতি গণনা (আদর) ছিল না; যজ্ঞ আরম্ভের সময়ই মুনিগণের বালনাশ (কেশচ্ছেদন) হইত, কিন্তু মৃত্যুদ্বারা বালনাশ (বালকবিনাশ) হইত না; রামায়ণ শুনিয়া রামের প্রতি অনুরাগ (ভক্তি) হইত, কিন্তু যৌবনবশতঃ রমণীর প্রতি অনুরাগ (আসক্তি) হইত না; বার্দ্ধক্যবশতই মুখের বিকৃতি হইত, কিন্তু ধনের অহঙ্কারে নহে।

(ড) এবং যে আশ্রমে মহাভারতেই শকুনিবধ (দুর্য্যোধনের মাতুলের বধ) শুনা যাইত, কিন্তু আশ্রমের কোন স্থানে শকুনিবধ (পক্ষিবিনাশ) দেখা যাইত না; পুরাণেই বায়ুপ্রলাপ (পবনদেবের প্রকৃষ্ট বর্ণনা) শুনা যাইত, কিন্তু কোন গৃহে কাহারও বায়ুপ্রলাপ (বায়ুরোগ-বশতঃ প্রলাপ) শুনা যাইত না; বৃদ্ধকালেই দ্বিজপতন (দন্তপতন) হইত, কিন্তু পাপে দ্বিজপতন (ব্রাহ্মণদিগের পাতিত্য) হইত না; উপবনের চন্দনতরুতেই জাড্য (শীতলতা)

---

(१) परिणामेन।

श्रवण-व्यसनम्, (१) शिखण्डिनां नृत्य-पक्षपातः, (२) भुजङ्गमानां (३) भोगः, कपीनां श्रीफलाभिलाषः, मूलानामधोगतिः। (ड)

तस्य चैवंविधस्य मध्यभाग-(४) मलङ्कुर्वाणस्य, अलक्तकालोहित-(५) पल्लवस्य; मुनिजनालम्बित-(६) कृष्णाजिन-जल-करङ्क-(७) सनाथशाखस्य, तापस-

---

भूतिमत्त्वं धनसम्पत्त्वं, धनासंग्रहकारित्वात्। एणकानां हरिणानामिव गीतश्रवणे व्यसनं आसक्तिः, न तु मुनीनां, तेषां कुत्राप्यासक्त्यभावात्। शिखण्डिनां मयूराणामिव नृत्ये नर्त्तनकाले पक्षस्य पतत्रस्य पातः पतनं कस्यचित् स्खलनमित्यर्थः, न तु मुनीनां नृत्ये नृत्यदर्शने पक्षपातः स्पृहा, तेषां सर्वत्रैव निस्पृहत्वात्। भुजङ्गमानां सर्पाणामिव भोगः शरीरं, न तु मुनीनां भोगः स्रक्चन्दनवनितादिसम्भोगजनितं सुखं सर्वभोगवर्जनात्। "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययो"रित्यमरः। कपीनां वानराणामिव श्रीफलाभिलाषः बिल्वफलेष्वभिरुचिः, न तु मुनीनां श्रीर्धनसम्पत्तिः सैव फलं काम्ययागादिफलं तत्राभिलाषः, तेषां मुमुक्षुतया फलानभिसन्हितकर्मकारित्वात्। तथा मूलानां तरुलतादि-कन्दानामिव मूलकानामिव वा अधोगतिः भूमेर्निम्नदिशि गमनं, न तु मुनीनामधोगतिर्नरकपतनम् निष्पापत्वात्।

अहो अतीवचमत्कारिणी खल्वियं श्लेषालङ्काररुचिरा परिसंख्यापरम्परा तरुणरमणीश्रेणीव परमां प्रीतिमावहति रसिकानाम्।

(ढ) तस्येति। तस्य चैवंविधस्य आश्रमस्य मध्यभागमलङ्कुर्वाणस्य रक्ताशोकतरोरधश्छायायामुपविष्टं भगवन्तं जाबालिं मुनिमपश्यमिति बहुदूरवर्त्तिन्या क्रिययाऽन्वयः। अत्र द्वितीयान्तपदानि जाबालिमित्यस्य विशेषणानि। प्रथमतः षष्ठ्यन्तपदानि च रक्ताशोकतरोर्विशेषणानि। अलक्तकवत् आलोहितानि

---

ছিল, কিন্তু কোন মনুষ্যের জাড্য (মূর্খতা) ছিল না ; অগ্নিরই ভূতি (ভস্ম) ছিল, কিন্তু মুনিগণের ভূতি ( সম্পদ্ ) ছিল না ; হরিণগণেরই গান শুনিতে আসক্তি ছিল, কিন্তু মুনিগণের নহে ; ময়ূরগণের নৃত্যের বেলায় পক্ষপাত ( পাখা পড়িয়া যাওয়া ) ছিল, কিন্তু মুনিগণের নৃত্যদর্শনে পক্ষপাত ( অভিলাষ ) ছিল না ; সর্পগণেরই ভোগ ( শরীর ) ছিল, কিন্তু মুনিগণের কোন ভোগ ( সম্ভোগ ) ছিল না ; বানরগণেরই শ্রীফলে ( বিল্বফলে ) অভিলাষ ছিল, কিন্তু মুনিগণের শ্রীফলে ( ধনসম্পদ্রূপ কাম্যকর্ম্মের ফলে ) অভিলাষ ছিল না ; এবং তরুলতা প্রভৃতির মূলেরই অধোগতি ( নীচের দিকে গতি ) হইত, কিন্তু মুনিগণের অধোগতি ( নরকে গমন ) হইত না।

(ঢ) এই প্রকার সেই আশ্রমের মধ্যস্থান অলঙ্কৃত করিয়া অনতিবৃহৎ একটি রক্ত অশোকবৃক্ষ ছিল ; তাহার পল্লবগুলি অলক্তকের ন্যায় ঈষৎ রক্তবর্ণ ছিল, মুনিগণ তাহার শাখাতে কৃষ্ণসারের চর্ম্ম এবং নারিকেলের করঙ্ক-( খোল ) নির্ম্মিত জলপাত্র সকল ঝুলাইয়া

---

(१) गीतव्यसनम्। (२) शिखण्डिनां, गीतनृत्यपक्षपातः। (३) भुजगानां, भुजङ्गानां।
(४) मध्यभागमलङ्कुर्वाणं। (५) अलक्तलोहित...। (६)...अवलम्बित...। (७)...करङ्क...।

कन्यकाभिर्मूलभाग-दत्त-(१) पीत-पिष्टातकानेक-(२) पञ्चाङ्गुलस्य, हरिण-शिशुभिः परिपीयमानालवाल-(३) सलिलस्य, मुनिकुमारकाबद्ध-कुशचीरदाम्नः, हरित-गोमयोपलेपन-(४) विविक्ततलस्य, तत्क्षण-कृत-(५) कुसुमोपहार-रमणीयस्य, नातिमहतः परिमण्डलतया विस्तीर्णावकाशस्य रक्ताशोकतरोरध-श्छायायामुपविष्टम्, (ढ) अत्युग्रतपोभि-(६) र्भुवनमिव सागरैः कनक-गिरिमिव कुलाचलैः, (७) क्रतुमिव वैतान-(८) वह्निभिः, कल्पान्त-दिवसमिव रविभिः,

---

ईषद्रक्तानि पल्लवानि यस्य तस्य। मुनिजनैः आलम्बिता ये कृष्णाजिनजलकरङ्काः कृष्णसारचर्म्माणि जल-रक्षणार्थकनारिकेलास्थिनिर्म्मिताः पात्रविशेषाश्च तैः सनाथाः सहिताः शाखा यस्य तस्य। "करङ्को मस्तकास्थ्नि नारिकेलफलास्थनि।" इति विश्वः। तापसकन्यकाभिः मूलभागे दत्तानि पीतपिष्टातकैः हरिद्रावर्ण-पटवासचूर्णैः अनेकानि पञ्चाङ्गुलानि हस्तस्थपञ्चाङ्गुलचिह्नानि यस्य तस्य। परि समन्तात् पीयमानं आल-वालस्य सलिलं जलं यस्य तस्य। मुनिकुमारकैः आबद्धानि कुशचीराणां दर्भैः करिष्यमाणवसनानां दामानि रज्जवो यत्र तस्य। हरितेन हरिद्वर्णेन अशुष्केण गोमयेन यदुपलेपनं तेन विविक्तं पवित्रं तलं यस्य तस्य। तस्मिन्नेव क्षणे कृतेन कुसुमोपहारेण पुष्पनिक्षेपेण रमणीयस्य सुन्दरस्य। परिमण्डलतया गोलाकारतया हेतुना विस्तीर्णः अवकाशो निम्नवर्त्ती छायाप्रदेशो यस्य तस्य। रक्तानामशोकानां कुसुमानां तरुरित्यर्थो न तु रक्तो यः अशोकतरुरिति, तस्याप्रसिद्धेः।

(ढ) अत्युग्रेति। अत्युग्राणि तपांसि येषां तैरिति महर्षिभिरित्यस्य विशेषणम्। सागरैः समुद्रैः भुवनं जगदिव, कुलाचलैः कुलपर्वतैः कनकगिरिं सुमेरुमिव, वितानस्य यज्ञस्य इम इति वैताना ये वह्नयो दक्षिणाग्नि-गार्हपत्याहवनीयनामानस्तैः क्रतुं यज्ञमिव, "वितानो यज्ञ उल्लोचे" इत्यादि मेदिनी। रविभिर्द्वादशादित्यैः कल्पान्तदिवसं प्रलयवासरमिव, तत्पूर्वं तदानीञ्च द्वादशादित्योदयस्य पुराणप्रसिद्धत्वात्।

---

রাখিয়াছিলেন; তপস্বীদের কন্যারা তাহার মূলে হরিদ্রাবর্ণ আবীরদ্বারা হস্তের পঞ্চাঙ্গুলের অনেক চিত্র করিয়া রাখিয়াছিলেন; হরিণশাবকগণ চতুর্দিক্ হইতে তাহার আলবালের জল পান করিতেছিল; মুনিকুমারগণ কুশময় বস্ত্র নির্ম্মাণ করিবার জন্য তাহার রজ্জু নির্ম্মাণ করিয়া সেই বৃক্ষে বন্ধন করিয়া রাখিয়াছিলেন; হরিতবর্ণ গোময়দ্বারা লেপন করায় তাহার তল পবিত্র ছিল; সেই সময়েই নানাবিধ পুষ্প নিক্ষেপ করায় সেই বৃক্ষটি সুন্দর দেখাইতেছিল; আর গোলাকার বলিয়া তাহার তলের ছায়া বিস্তৃত ছিল; সেই বৃক্ষের তলে ছায়াতে উপবিষ্ট ভগবান্ মহর্ষি জাবালিকে দেখিলাম।

(ণ) সমুদ্রগণে পরিবেষ্টিত ভূমণ্ডলের ন্যায়, কুলপর্ব্বতগণে পরিবেষ্টিত সুমেরুর ন্যায়, যজ্ঞীয়বহ্নিপরিবেষ্টিত যজ্ঞের ন্যায়, দ্বাদশ সূর্য্য-পরিবেষ্টিত প্রলয়দিবসের ন্যায় এবং প্রলয়-

---

(१)...कुमारिकाभिरालवालदत्त...। (२)...पीतपिष्ट...। (३) पीयमान...। (४)...उपलिप्त...। (५)...रचित...। (६) उग्रतपोभिः। (७) कुलपर्वतैः। (८) वैतानिकैः...।

कालमिव कल्पैः, समन्तान्महर्षिभिः परिवृतम्, (ण) उग्र-शाप-भीतयेव कम्पित-देहया (१) प्रणयिन्येव विहित-केशग्रहया क्रुद्धयेव कृत-भ्रूभङ्गया मत्तयेवा-कुलितगमनया प्रसाधितयेव प्रकटित-तिलकया जरया गृहीत-व्रतयेव भस्म-धवलया धवलीकृत-विग्रहम्, (त) आयामिनीभिः पलित-पाण्डुराभिः तपोभि-(२) र्विजित्य मुनिजनमखिलं धर्मपताकाभिरिवोच्छ्रिताभिः (३) अमरलोकमारोढुं,

---

कल्पैः प्रलयैः कालं अखण्डं समयमिव, प्रलयानां पौर्वापर्य्येऽपि 'एकत्वतया मूलतः परिवृतस्त'दित्यादिवत् तैरखण्डकालस्य यथा कथञ्चित् परिवेष्टनमुपपद्यते। महर्षिभिः समन्तात् सर्वासु दिक्षु परिवृतं परिवेष्टितम्। अत्र मालोपमालङ्कारः।

(ण) उग्रेति। उग्रशापभीतया जाबालेरिव भयङ्कराभिसम्पातवत्तया स्त्रियेव, कम्पितो देहो यया, पक्षान्तरे यस्यास्तया। अत्र पूर्णोपमालङ्कारः। विशेषणमात्रोपादानाद्विशेष्यज्ञानस्य नियततया स्त्रियेत्यनुक्त-मपि न न्यूनपदतादोषः "अयमुदयति मुद्राभञ्जनः पद्मिनीना"मित्यमरकोषटीकायां रघुनाथोदाहृतवत्। केचित्तु तत्प्रेक्षां वदन्ति, तन्मते स्त्रियेति नोपादानम्। एवमन्यत्रापि। प्रणयिन्या वल्लभयेव, विहितः केशग्रहः कुन्तलावलम्बनं यया तया, पक्वताविधानात् रतिकलहाक्रोशाच्चेति भावः। पूर्णोपमा। क्रुद्धया क्रोधाविष्टया स्त्रियेव, कृतः भ्रुवोर्भङ्गः शैथिल्यं भ्रुकुटी च यया तया। पूर्णोपमा। मत्तया मद्यपानमत्तया स्त्रियेव, आकुलितं स्खलितीकृतं गमनं यया, पक्षे यस्यास्तया। पूर्णोपमा। प्रसाधितया अलङ्कृतया स्त्रियेव, प्रकटितानि प्रकाशितानि तिलकानि शरीरे कृष्णवर्णचिह्नानि, ललाटे तिलकश्च यया तया। पूर्णोपमा। तथा गृहीतव्रतया धृतकिञ्चिन्नियमया स्त्रियेव भस्मवद्धवलया भस्मना धवलया च जरया वार्द्धक्येन। पूर्णोपमा। धवलीकृतविग्रहं शुक्लीकृतशरीरम्।

(त) आयामीति। आयामिनीभिर्दीर्घाभिः, पलितेन वार्द्धक्यजनितशौक्ल्येन पाण्डुराभिः पाण्डुवर्णाभिः।

---

পরিবেষ্টিত অখণ্ড কালের ন্যায়, মহর্ষি জাবালি অন্যান্য মুনিগণে পরিবেষ্টিত ছিলেন। (ণ) ভয়ানক অভিশাপের ভয়ে কোন স্ত্রীলোক যেমন নিজদেহ কম্পিত করে, জরাও তেমন তাঁহার দেহ কম্পিত করিতেছিল; প্রিয়তমা যেমন কেশগ্রহণ করে, জরাও তেমন তাঁহার কেশগ্রহণ করিয়াছিল (কেশ পাকাইয়াছিল); ক্রুদ্ধা রমণী যেমন ভ্রূভঙ্গ করে, জরাও তেমন তাঁহার ভ্রূভঙ্গ (ভ্রূযুগলকে শিথিল) করিয়াছিল; মদ্যপানে মত্তা রমণী যেমন স্খলিতভাবে গমন করে, (এখানে পা ফেলিতে ওখানে ফেলে), জরাও তেমন তাঁহার গতি স্খলিত করিয়াছিল; অলঙ্কৃতা রমণী যেমন ললাটে তিলকধারণ করে, জরাও তেমন তাঁহার শরীরে তিলের মত কাল কাল চিহ্ন করিয়াছিল; কোন ব্রতকারিণী স্ত্রী যেমন ভস্ম মাখিয়া শ্বেতবর্ণ হয়, জরাও তেমন ভস্মের ন্যায় শ্বেতবর্ণ হইয়াছিল; সেই জরা জাবালির শরীর শ্বেতবর্ণ করিয়াছিল। (ত) জাবালি, দীর্ঘ ও বার্দ্ধক্যবশতঃ পাণ্ডুবর্ণ জটা-সমূহে শোভা পাইতেছিলেন; সেইরূপ জটাসমূহ থাকায় প্রতীতি হইতেছিল যেন তপস্যা-

---

(१) उग्रशापकम्पितदेहया। (२) तपसा। (३) उपार्जिताभिः।

पुण्य-रज्जुभिरिवोपसंगृहीताभिः, अतिदूर-प्रवृद्धस्य तपस्तरोः कुसुम-मञ्जरीभि-रिवोद्गताभिर्जटाभिरुपशोभमानम्, (थ) उपरचित-भस्म-त्रिपुण्ड्रकेण तिर्य्यक् प्रवृत्त-गङ्गा-(१) स्रोतस्त्रयेण (२) हिमगिरि-शिलातलेनेव ललाटफलकेनो-पेतम्, (३) (द) अधोमुख-चन्द्र-कलाकाराभ्यामवलम्बित-वलि-शिथिलाभ्यां भ्रूलताभ्यामवष्टभ्यमान-दृष्टिम्, (ध) अनवरत-मन्त्राभ्यास-(४) विवृताधर-पुटतया निष्पतद्भिरतिशुचिभिः सत्यप्ररोहैरिव स्वच्छेन्द्रिय-वृत्तिभिरिव विद्या-गुणैरिव (५) करुणारस-(६) प्रवाहैरिव दशन-मयूखैर्धवलित-पुरोभागम्, उद्गम-

---

उच्छ्रिताभिरुत्तोलिताभिः धर्म्मपताकाभिर्धर्म्मसूचकध्वजाञ्चलैरिव स्थिताभिः। अत्र जात्युत्प्रेक्षालङ्कारः अमरलोकं स्वर्गं। उपसंगृहीताभिरायोजिताभिः पुण्यरज्जुभिर्धर्म्ममयरश्मिभिरिव स्थिताभिः। अन्योऽपि वृक्षादिमुच्चदेशमारोढुं रज्जुमायोजयति। अत्रापि जात्युत्प्रेक्षा। अतिदूरप्रवृद्धस्य अतीववृद्धिं प्राप्तस्य तपः एव तरुस्तस्मात् उद्गताभिरुत्थिताभिः। अत्र निरङ्गकेवलरूपकजात्युत्प्रेक्षयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

(द) उपेति। उपरचितानि भस्मत्रिपुण्ड्राणि भस्मना तिर्य्यक् तिस्रो रेखा यस्मिन् तेन, अतएव तिर्य्यक् प्रवृत्तं तिरश्चीनभावेन प्रचलितं गङ्गायाः स्रोतस्त्रयं यत्र तादृशेन, हिमगिरेः शिलातलेन प्रस्तरफलकेनेव ललाटफलकेन भालदेशेन उपेतं विशिष्टम्। अत्र तादृशशिलातलाप्रसिद्धेर्द्रव्योत्प्रेक्षाल-ङ्कारः।

(ध) अध इति। अधोमुखी या चन्द्रकला चन्द्ररेखा तस्या आकार इव आकारो ययोस्ताभ्याम् अवलम्बिता शिथिलतया निम्ने पतिता या वलिः शिथिलं चर्म्म "वलिश्चामरदण्डे च जरया श्लथचर्म्मणि" इत्यादि विश्वः, तया शिथिलाभ्यां शैथिल्यान्नयनोपरि पतिताभ्यामित्यर्थः, अतएव ताभ्यां भ्रूलताभ्यां अवष्टभ्य-माना आश्रीयमाणा कथञ्चिदवरुध्यमाना दृष्टिर्दर्शनशक्तिर्यस्य तम्। अत्रार्थी समासगतलुप्तोपमालङ्कारः।

(न) अनेति। अनवरतो यो मन्त्राभ्यासो मन्त्रजपपौनःपुन्यं तेन विवृतं व्यादत्तं अधरपुटं ओष्ठयुगलं यस्य तस्य भावस्तया हेतुना, निष्पतद्भिर्निर्गच्छद्भिः, अतिशुचिभिः परमधवलैः, सत्यप्ररोहैरिव सत्यवाक्य-सत्यव्यवहारयो

---

দ্বারা অন্যান্য মুনিগণকে পরাজিত করিয়া ধর্ম্মের পতাকা তুলিয়া দিয়াছেন, স্বর্গলোকে আরোহণ করিবার নিমিত্ত যেন ধর্ম্মময় রজ্জুসমূহ সংগ্রহ করা হইয়াছে এবং অত্যন্ত বৃদ্ধি-প্রাপ্ত তপস্যারূপ তরু হইতে যেন পুষ্পমঞ্জরী প্রাদুর্ভূত হইয়াছে। (দ) জাবালি, ললাটে ভস্মদ্বারা ত্রিপুণ্ড্র অঙ্কিত করিয়াছিলেন; তাহাতে বোধ হইতেছিল যেন হিমালয়ের কোন প্রস্তরফলকে গঙ্গার তিনটি স্রোত তির্য্যগ্ভাবে (তেরচা ভাবে) প্রবাহিত হইতেছে (ধ) অধোমুখ চন্দ্ররেখার ন্যায় ভ্রূযুগল তাঁহার দৃষ্টি রোধ করিতেছিল, কারণ, সেই ভ্রূযুগ-লের শিথিল চর্ম্ম আসিয়া নয়নের উপর পতিত হইয়াছিল, (ন) অবিশ্রান্ত মন্ত্র জপ করায় ওষ্ঠযুগল বিবৃত (ফাঁক করা) হইতেছিল বলিয়া মুখ হইতে নির্গত অত্যন্ত শুভ্রবর্ণ

---

(१) त्रिपथगा। (२)…त्रयेणेव…तलेन। (३)…पट्टमीदृशं।
(४)…मन्त्राक्षराभ्यास…। (५) क्वचिदयं पाठो नास्ति। (६) करुणरस…

दमल-गङ्गा-प्रवाहमिव जह्नुम्, (न) अनवरत-(१) सोमोद्गार-सुगन्धि-निश्वासा-(२) वकृष्टैर्मूर्त्तिमद्भिरिव शापाक्षरैः (३) सदामुखभाग-सन्निहितैः परिस्फुरद्भिरलिभि-रविरहितम्, अतिक्षामतया निम्नतर-गण्डगर्त्तं उन्नततर-(४) हनु-घोणं आकराल-तारकं अवशीर्य्यमाण-विरल-नयन-पक्ष्ममालं उद्गत-दीर्घरोम-रुद्ध-श्रवण-विवरं आनाभि-लम्बित-कूर्च्चकलाप-माननमादधानम्, (प) अतिचपलानामिन्द्रिया-

---

रङ्कुरैरिव, स्वच्छा निर्म्मलाः पापहीना या इन्द्रियवृत्तयः मनःप्रभृतीनामिन्द्रियाणां व्यापारास्ताभिरिव, विद्यागुणे-र्ज्ञानधर्म्मैर्विनयादिभिरिव करुणारसप्रवाहैरिव दयारसस्रोतोभिरिव सर्व्वत्र निर्म्मलत्वादिति भावः, दशनमयूखै-र्दन्तकिरणैः धवलितः श्वेतीकृतः पुरोभागः सम्मुखदेशो यस्य तं, अतएव उद्वमन् दक्षिणकर्णान्निर्गच्छन् अमलो गङ्गाप्रवाहो यस्मात्तं जह्नुं तदाख्यं मुनिमिव स्थितम्। अत्र वमतेरकर्म्मकत्वं विवक्षितं। अत्र चतस्र एव गुणोत्प्रेक्षा वाक्यार्थहेतुकं काव्यलिङ्गमुपमा च इत्येतेषामङ्गाङ्गिभावेन सङ्करः।

पुरा किल हिमालयान्निर्गता गङ्गा यजमानस्य जह्नोर्यज्ञवाटं प्लावयन्ती क्रोधात्तेन निपीता पुनर्भगीरथप्रार्थनया कर्णरन्ध्रान्निःसारिता, इति ब्रह्मपुराणवार्त्ता, अतएव जाह्नवीत्युच्यते।

(प) अनेति। इत्यादीन्याननविशेषणानि। अनवरतं यः सोमस्य निपीतसोमरसस्य उद्गारः तेन सुगन्धिना निश्वासेन वायुना अवकृष्टैराकृष्टैः मूर्त्तिमद्भिः शापाक्षरैरभिसम्पातवर्णैरिव। परिस्फुरद्भि-र्विचरद्भिः, अलिभिर्भ्रमरैः अविरहितं अपरित्यक्तं। अत्र गुणोत्प्रेक्षालङ्कारः। अतिक्षामतया नितान्त-क्षीणदेहतया निम्नतरौ अतीवगभीरौ गण्डगर्त्तौ गर्त्तीभूतौ गण्डौ यत्र तत्। उन्नततरा अत्युच्चाः हनू गण्डो-परिभागद्वयं घोणा नासिका च यस्मिन् तत्। नितान्तक्षीणदेहानामीदृगाननं भवतीति द्रष्टव्यम्। आकराले तेजस्वितया अतीवोग्रे तारके नयनताराद्वयं यत्र तत्। अवशीर्य्यमाणा क्षीयमाणा विरला अनिविडा नयन-पक्ष्ममाला लोचनलोमश्रेणी यत्र तत्। उद्गतैरुत्पन्नैः दीर्घैः रोमभिः रुद्धे आवृते श्रवणविवरे कर्ण-रन्ध्रद्वयं यत्र तत्। आनाभिलम्बितो नाभिपर्य्यन्तपतितः कूर्च्चकलापः श्मश्रुराजिर्यत्र तत्। "कूर्च्चमस्त्री भ्रुवोर्मध्ये श्मश्रु कैतवयोरपि।" इति त्रिकाण्डशेषः। तादृशमाननं मुखं आदधानं धारयन्तम्।

---

সত্যের অঙ্কুরের ন্যায়, নির্ম্মল ইন্দ্রিয়বৃত্তির ন্যায়, বিদ্যার গুণ বিনয়াদির ন্যায় এবং দয়ার স্রোতের ন্যায় দন্তরশ্মি তাঁহার সম্মুখভাগ শ্বেতবর্ণ করিয়াছিল, সুতরাং নির্ম্মল গঙ্গাপ্রবাহ-নিঃসারণকারী জহ্নুমুনির ন্যায় তাঁহাকে দেখা যাইতেছিল; (প) যজ্ঞে যে সোমরস পান করিয়াছিলেন, অবিশ্রান্ত তাহার উদ্গার (ঢেঁকুর) হওয়ায় সুগন্ধি নিশ্বাসবায়ুতে আকৃষ্ট হইয়া ভ্রমরগণ, অভিশাপের মূর্ত্তিমান্ অক্ষরের ন্যায় সর্ব্বদা মুখের নিকট থাকিয়া বিচরণ করিতেছিল; শরীর অতিশয় কৃশ বলিয়া গালের গর্ত্ত দুইটা গভীর এবং তাহার উপরের হাড় দু'খানা ও নাক খুব উঁচু ছিল, নয়নের তারা অত্যন্ত উগ্র এবং লোমগুলি জীর্ণ ও বিরল (খুব ফাঁক্ ফাঁক্) ছিল, দীর্ঘ রোমরাজি উৎপন্ন হইয়া কর্ণবিবর আবৃত করিয়াছিল এবং শ্মশ্রুসমূহ (দাড়ী) নাভিপর্য্যন্ত পতিত হইয়াছিল, জাবালি এই ভাবের মুখমণ্ডল ধারণ

---

(१) अविरत, अविरल...। (२)...निःश्वासा ..। (३) मूर्त्तिमद्भिः शापाक्षरैरिव। (४) समुन्नत...।

ग्राणां (१) अन्तःसंयमन-रज्जुभिरिवातताभिः कण्ठनाडीभिर्निरन्तरावनद्ध-(२) कन्धरम्, समुन्नत-(३) विरलास्थि-पञ्जरम्, अंसावलम्बित-धवल-(४) यज्ञोपवीतम्, अनिल-(५) वश-जनित-तनु-तरङ्ग-भङ्गं उत्प्लवमान-नवमृणालमिव (६) मन्दाकिनी-प्रवाहं अकलुषमङ्गमुद्वहन्तम्, (फ) अमल-स्फटिक-शकल-घटितमक्ष-(७) वलय-मत्युज्ज्वल-(८) स्थूल-मुक्ताफल-ग्रथितं सरस्वती-हारमिव चलदङ्गुलि-विवर-गत-

---

(फ) अतीति। इतः प्रभृत्यङ्गविशेषणानि। इन्द्रियाण्येव अश्वाः विषयान् प्रति प्राणिनामाकर्षणा-दिति भावः, कठोपनिषच्च यथा—"इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।" तेषां अन्तर्मध्ये संयमन-रज्जुभिरिव बन्धनरश्मिभिरिव, आतताभिर्विस्तीर्णाभिः कण्ठनाडीभिर्गलदेशस्थशिराभिः निरन्तरं घनं यथा स्यात्तथा अवनद्धा सम्बद्धा कन्धरा ग्रीवा यत्र तत्। अत्र निरङ्गकेवलरूपकमात्युत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः। समुन्नतं मांसादिचयात् समुन्नवत् दृश्यमानं विरलं अघनं अस्थिपञ्जरं यत्र तत्। अंसे स्कन्धे आलम्बितं लम्बमानं धवलं यज्ञोपवीतं यत्र तत्। अतएव अनिलवशेन वायुवशेन जनितः तनूनां क्षुद्राणां तरङ्गाणां ऊर्म्मीणां भङ्गः कौटिल्यं वक्रता यस्मिन् तं, तथा उत्प्लवमानं जलोपरि सन्तिष्ठमानं नवं मृणालं यस्मिन् तं, मन्दाकिन्या गङ्गायाः प्रवाहमिव अकलुषं निर्म्मलं अङ्गं देहावयवं उद्वहन्तं धारयन्तम्। अत्र तादृश-कुटिलतनुतरङ्गसदृशं अस्थिपञ्जरं, जलोपरिप्लवमाननवमृणालसदृशञ्च यज्ञोपवीतमित्युपमालङ्कारः।

(ब) अमलेति। अत्युज्ज्वल-स्थूल-मुक्ताफलग्रथितं सरस्वत्या वाग्देव्याः हारं कण्ठमालामिव, चल-न्तीनां मालागुटिकाकर्षणेन चञ्चलीभूतानां अङ्गुलीनां विवरगतं रन्ध्रस्थितं, अमलैः स्वच्छैः स्फटिकानां शकलैः खण्डैः घटितं निर्म्मितं अक्षवलयं जपमालां आवर्त्तयन्तं क्रमेण संख्याविशेषपूरणात् भ्रमयन्तं, अतएव अनवरतं भ्रमितं प्रवहनामकवायुना घूर्णितं तारकाचक्रं नक्षत्रचक्रं यस्मिन् तादृशं अपरं द्वितीयं ध्रुवं तदाख्यं नक्षत्रविशेषमिव स्थितम्। यथा चिरस्थिरयोरुभयोर्ध्रुवनक्षत्रयोर्म्मध्यबद्धं नक्षत्रचक्रं प्रवहवायुना निरन्तरं घूर्ण्यते, तथा उपविष्टेन स्थिरतरेण मुनिना वामहस्ताग्रस्थापिता स्फटिकमाला जपसंख्यारक्षणाय निरन्तरमङ्गुलीभिः परिचालितेति सादृश्यम्। तथा च सूर्य्यसिद्धान्ते—

---

করিতেছিলেন ; (ফ) আর অত্যন্তচঞ্চল ইন্দ্রিয়রূপ অশ্বগণকে অভ্যন্তরে বন্ধন করিয়া রাখিবার রজ্জুর ন্যায় বিস্তৃত শিরাসমূহ তাঁহার গ্রীবাদেশ ঘনভাবে পরিবেষ্টন করিয়া রহিয়াছিল, পার্শ্বের বিরল অস্থিপঞ্জর উঁচু হইয়াছিল এবং শুভ্রবর্ণ একটি যজ্ঞোপবীত স্কন্ধদেশে লম্বমান ছিল ; সুতরাং বায়ুবেগে ক্ষুদ্র ক্ষুদ্র তরঙ্গগুলি বক্র হইয়া গেলে এবং জলের উপরে একটি নূতন মৃণাল ভাসিতে থাকিলে গঙ্গার প্রবাহ যেরূপ দেখা যায়, জাবালি সেইরূপ অঙ্গ বহন করিতে-ছিলেন। (ব) অতিশয় উজ্জ্বল ও বৃহৎ মুক্তাসমূহে গ্রথিত সরস্বতীর কণ্ঠহারের ন্যায়, নির্ম্মল স্ফটিকখণ্ডনির্ম্মিত জপমালা অঙ্গুলীর অন্তরালে রাখিয়া পরিবর্ত্তিত করিতেছিলেন,

---

(१) इन्द्रियाश्वा। (२)...संबद्ध...। (३) उन्नत...। (४) अवलम्बित, लम्बियमा...।
(५) वायु। (६)...ल्लावमाणालमिव। (७) घटिताक्ष...। (८) उज्ज्वल...।